


पंख फैले तो क्या बोले? उड़ान की सच्ची शक्ति है नी

**पारले-जी**

स्वाद भरे, शक्ति भरे.

भारत के सबसे ज़्यादा बिकनेवाले बिस्किट

# लेखनीं स्थापयतु तत्रैव

| | |
|---|---|
| माता – वत्स! तां लेखनीं स्थापयतु तत्रैव। मा स्पृशतु भवान्। | Keep that pen there child, don't touch it. |
| पुत्रः – एवम् एव पश्यन् अस्मि अम्ब! अहं किमपि न करोमि। | I am only looking at it, mother. I will not do anything else. |
| मा – जानामि अहम्। स्थापयतु प्रथमम्। | I know, keep it there first of all. |
| पु – सम्यक् लिखति अम्ब, एषा लेखनी। | This pen is good for writing, mother. |
| मा – दर्शनं समाप्तम्। इदानीं लेखनम् आरब्धं वा? स्थापयतु तावत्। पातनेन अन्यरीत्या वा लेखन्याः अग्रं नाशितं चेत् लेखनी निरुपयोगिनी भवेत्।' | Oh! you have finished seeing it and are now trying to write with it, is it? If you drop it down or do something else and the tip of the nib is damaged, the pen would be useless. |
| पु – तथा किमपि न करोमि अम्ब! | I will not do anything like that mother. |
| मा – गतसप्ताहे एवम् एव वदन् भवान् घटीं नाशितवान्। स्मर्यते वा तत्? | Last week also you said the same thing and spoiled the clock, you remember? |
| पु – तत् तु अकस्मात् जातम्। | It was by mistatke. |
| मा – कोSपि बुद्ध्या न नाशयति। सर्वे दोषाः अकस्मात् एव भवन्ति। | Nobody spoils anything want only. Every thing happens only by mistake. |
| पु – हुँ, लेखनीं स्थापितवान् अस्मि। अम्ब! एतां मह्यं ददाति वा? | OK mother, I have put back the pen. Will you give it to me? |
| मा – भवते? भवत्समीपे एका लेखनी अस्ति एव खलु? पुनः एषा किमर्थम्? | To you? You already have one! Why another? |

# नामनिर्वचनम्-१३

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् अवयवार्थाः निरूप्यन्ते।]*

**अनसूया–** न विद्यते असूया यस्याः सा। असूयारहिता स्त्री इति तात्पर्यम्। 'असूया नाम परगुणेषु दोषाविष्करणम्'– (सिद्धान्तकौमुदी)। [असु(उपतापे)+कण्ड्वादि यक्+अ]

अत्रिमहर्षेः पत्नी अनसूया सुप्रसिद्धा। एषा परीक्षितुम् आगतान् ब्रह्मविष्णुमहेश्वरान् अपि पातिव्रत्यधर्मेण जितवती, सन्तोषितवती इति कथा श्रूयते। अभिज्ञानशाकुन्तलनाटके प्रस्तुताः शकुन्तलायाः सखी अनसूया अपि प्रसिद्धा एव।

**राधा–** राध्यति राध्नोति इति वा राधा। [राध(संसिद्धौ)+अच्] राधधातुद्वयम् अस्ति। एकस्य अर्थः संसिद्धिरिति, अपरस्य च वृद्धिः इति। एवं च या वर्धते सा राधा इति सामान्यतः तात्पर्यं वक्तुं शक्नुमः।

श्रीकृष्णस्य सखीषु अन्यतमा राधा। कर्णस्य उपमाता अपि राधा। विशाखानक्षत्रम् अपि राधाशब्देन निर्दिश्यते। अन्ये अपि केचन अर्थाः एतस्य सन्ति एव। तथा च मेदिनीकोषः– "राधा चित्रभेदे च धन्विनाम्। गोपी-विशाखामलकी-विष्णुक्रान्तासु विद्युति" इति।

**राजीवः–** राजिः अस्ति इति राजीवः। (राजि+वः) हरिणविशेषः 'राजीव' इति उच्यते। तस्य हरिणस्य आ शिरसः आपुच्छं श्वेतरेखा (राजिः) भवति। अतः सः राजीवः। तथा च वैजयन्तीकोषः– "यज्ञाङ्ग एणस्ताम्रस्तु हरिणस्तृणसञ्चरः। राजीवस्त्वेष राजीमान्" इति। मीनविशेषः अपि राजीवः इति उच्यते। गजः, सारसपक्षी इत्यादयः अन्ये अर्थाः अपि एतस्य पदस्य सन्ति एव। तथा च त्रिकाण्डकोषः– "हस्ती महामृगो पीलुः सिन्धुरो दीर्घमारुतः। राजीवो जलकाङ्क्षश्च" इति।

नपुंसकलिङ्गस्य राजीवशब्दस्य 'कमलम्' इति अर्थः। 'राजी दलश्रेणिः अस्य अस्ति' इति व्युत्पत्तिः तस्य।

---

**सूचना–** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' = क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अङ्कः - | Lap |
| अश्रुतवती - | Unheard of (Woman) |
| आघ्रातः - | Smelt |
| आसन्नमरणः - | On the verge of death |
| इष्टवती - | Desired |
| उज्ज्वलम् - | Bright |
| उपेक्षा - | Neglect |
| ऊढवती - | A woman who is bearing the burden |
| कटः - | Mat |
| कापालिकः - | A member of a certain shaiva sect |
| कुनदी - | A dirty river |
| चेतुम् - | To select |
| जामिता - | Disgust |
| दत्तकरूपेण - | Son by adoption |
| निस्सन्ताना - | Childless woman |
| निर्वातता - | Airlessness |
| पर्यवेक्षकः - | Supervisor |
| पर्व - | Festival |
| पाटलपुष्पम् - | Rose |
| पूर्वयोजना - | Preplan |
| प्रतिदातुम् - | To Give back |
| प्रयतमानः - | Trying |
| प्रवृत्तिः - | Behaviour |
| प्रसूतिका - | A woman who has recently delivered |
| फलसमृद्धिः - | Crop |
| भावितवान् - | Thought |
| मूलम् - | Root |
| रजकः - | Washerman |
| लघुवचनम् - | Light talk |
| वस्तुस्थितिः - | Factual position |
| वामनः - | Dwarf |
| वारं वारम् - | Again and Again |
| विदारणम् - | To split |
| विभेदः - | Crack |
| वृकः - | Woolf |
| शल्यः - | A kind of fish |
| शष्कुली - | A snack |
| शीतलारोगः - | Smallpox |
| सौगन्ध्यम् - | Fragrance |
| संविधानम् - | Constitution |

* * * *

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'  सञ्चालकः– 'नागिरेड्डी'





## गतदिनापेक्षया उत्तमतरम् एतद्दिनम्

वयं पुनरपि नूतने वर्षे पदम् अर्पयितुं सिद्धाः स्मः। "हा हन्त! न ज्ञायते– समयः कथं गच्छति इति!" इति वदन्ति जनाः तदा तदा आश्चर्येण – सद्यः एव नूतनवर्षस्य स्वागतम् उक्तम् इव भावयन्तः।

कालः गच्छति। सत्यम्। सः अस्मान् परितः प्रवहति। भूतं भविष्यता सह योजयति। एतस्य कालस्य वैशिष्ट्यं यत् एषः मातुं शक्यः। कालस्य एतत् वैशिष्ट्यं जानन्तः केचन उत्तमस्य भविष्यतः निर्माणार्थं कालप्रवाहस्य उपयोगं स्वीकुर्वन्ति। एतादृशाः जनाः एव मानवविकासार्थम् अपूर्वं कार्यं कर्तुम् अर्हन्ति।

कालः कदाऽपि न तिष्ठति।. निरन्तरगतिः कालस्य स्वभावः। निरन्तरं प्रवहतः कालस्य न आदिः, न वा अन्त्यम्। समयः चिरः। कदापि न परिवर्तते सः। तथापि वयं द्वादशमासात्मकस्य कस्यचित् कालखण्डस्य आरम्भं वर्षारम्भं मन्यामहे। वस्तुतस्तु मानवाः वयं परिवर्तनम् इच्छामः। अतः अखण्डस्य अपि कालस्य भागं प्रकल्प्य भागस्य आरम्भं कल्पयित्वा नूतनत्वप्राप्तिम् अनुभवामः। एवं वर्षारम्भः अस्माकं परिवर्तनापेक्षिणः मनसः नूतनत्वप्राप्तिरूपाम् आकांक्षां द्योतयति।

इदानीं प्रश्नः उदेति– परिवर्तनस्य अनुभवं प्राप्तुं किं षष्ट्यधिकत्रिशताधिकदिनानि यावत् प्रतीक्षा करणीया? इति। एतदपेक्षया प्रतिदिनं प्रतिक्षणं परिवर्तनस्य, प्रगतेः, विकासस्य च अपेक्षा एव गरीयसी खलु?

मित्राणि! वयं सर्वे सङ्कल्पं कुर्याम यत् गतदिनापेक्षया एतद्दिनम् उत्तमतरं यथा स्यात् तथा प्रयत्नं कुर्मः इति।


सम्पुटः–१०  जनवरी-१९९४  सञ्चिका–१०

प्रतिकृतिमूल्यं रू. ४-०० • वार्षिकं ग्राहकशुल्कं रू. ४८-००






*I shared my homework. And some maths. Did some patterns. Shared my* **Mortons.**





# MORTON

**SWEETS**

*We enjoy our School days....and Lunch Breaks more so with Mortons which we share. It has been our Family's favourite for years and years. Delicious and yummy in so many flavours. All with the goodness of Creamy Milk, Glucose and Sugar. Chocolate and Coconut Cookies, Rose Eclairs, Supreme Chocolate and Coconut Toffees, Lacto Bonbons, Mango King and so many other delicious treats.*

*Um m m m m. Every bite a yummy delight.*







*A lifetime of real goodness*

**MORTON CONFECTIONERY & MILK PRODUCTS FACTORY**
P.O. : Marhowrah 841 418.Dist. : Saran, Bihar

वार्ताविशेषः–

# भीकरः भूकम्पः




एतस्मिन् वर्षे गणेशचतुर्थीपर्व सप्टेम्बर् १९ दिनाङ्के आसीत्। ततः दशानां दिनानाम् अनन्तरं गणेशविसर्जनोत्सवः समग्रे देशे इव महाराष्ट्रे अपि महता उत्साहेन आचरितः।

सप्टेम्बर्मासस्य २९ तमे दिनाङ्के सायङ्काले महाराष्ट्रस्य लातूर्मण्डलस्य(जिल्ला) खिल्लारी-नामकस्य ग्रामस्य बालाः "पार्वतितनय पाहि मां, विघ्नविनाशक पाहि माम्" इति गायन्तः गणेशविग्रहं शोभायात्रया विसर्जनार्थं नीतवन्तः। विसर्जनं समाप्य– "पातु नः पुनरायाहि वर्षेऽग्रिमे विनायक" इति गणेशं सम्प्रार्थ्य गृहं प्रत्यागताः।

यदा तैः गृहं प्राप्तं तदा रात्रेः द्वितीयः यामः आसन्नः आसीत्। श्रान्ताः बहवः सुखनिद्रां प्राप्तुम् इच्छन्तः शय्याम् आश्रित्य निद्रावशं गताः। तेषु केचन गान-नृत्यादिभिः रात्रिं यापयितुम् इच्छन्तः गृहात् बहिः आगताः। एवं गृहात् बहिः आगताः केचन सजीवं स्थितवन्तः। ये सुखनिद्रां प्राप्तुं शय्याम् आश्रितवन्तः ते सर्वे भीकरभूकम्पस्य आहुतयः सन्तः चिरनिद्रां प्राप्य यमलोकस्य अतिथयः जाताः। उषःकाले चतुर्वादनसमये कांश्चन क्षणान् यावत् प्रवृत्तस्य एतस्य घोरभूकम्पस्य कारणतः मराठवाडाप्रदेशस्य पञ्चाशत् ग्रामाः नगरद्वयं च भूमिसमतां प्राप्नुवन्।

विन्ध्यपर्वतस्य दक्षिणे भागे कानिचन राज्यानि कम्पितवतः एतस्य भूकम्पस्य तीव्रता ६.५ आसीत् इति 'रिक्टर्मापकं' सूचयति। भूकम्पतीव्रता एतावन्मात्रम् एव आसीत् चेदपि भूकम्पतः जाता जीवहानिः सम्पत्तिहानिः च अपारा एव। ३०,००० अधिकाः जनाः प्राणैः वियुक्ताः जाताः स्युः इति, लक्षाधिकजनाः हानिग्रस्ताः स्युः इति च प्राथमिकी समीक्षा ज्ञापयति। यत्र भूकम्पः उत्पन्नः तस्मिन् प्रदेशे सर्वाणि गृहाणि मृन्मयभित्त्या मृच्छद-च्छदेन च निर्मितानि आसन् इत्यतः तानि सर्वाणि नामावशेषतां गतानि इति तज्ज्ञाः वदन्ति। कश्चन देवालयः अपि पतितः

तत्र। किन्तु आलयस्थः गणेशविग्रहः तु अल्पाम् अपि क्षतिम् अप्राप्य स्थिताः आसीत् इति काचित् आश्चर्यकरी वार्ता।

१९६७ तमे वर्षे कोयनाजलबन्धकेन्द्रे ६.५ तीव्रतायुक्तः (रिक्टर्-मापकानुगुणं) भूकम्पः जातः चेदपि तदा २०० जनाः केवलं, प्राणैः वियुक्ताः अभवन्। १९९१ तमे वर्षे उत्तरप्रदेशस्थायाम् उत्तरकाश्यां यः भूकम्पः जातः (तीव्रता ६.१) तत्र २००० जनाः प्राणैः वियुक्ताः जाताः आसन्, ८०,००० जनाः च हानिग्रस्ताः आसन्। गते वर्षे खिल्लारिप्रदेशे १२५ लघुभूकम्पाः मापकयन्त्रेण लक्षिताः सन्ति। 'अत्रान्तरे एतादृशः घोरः भूकम्पः सम्भवेत्' इति केनापि न निरीक्षितम् आसीत्। भूकम्पः निरीक्षितः आसीत् वा न वा इति तु अन्यदेतत्, अनूह्या अपारा हानिः तु जाता एव।

भूकम्पवार्तां श्रुत्वा देशस्य सर्वेभ्यः कोणेभ्यः विविधसेवासंस्थीयाः कार्यकर्तारः खिल्लारिप्रदेशम् आगत्य साहाय्यकार्यम् आरब्धवन्तः। भित्तिखण्डादीनाम् अधः स्थितान् शवान् बहिःआनीतवन्तः। आहारवितरण-वसतिकल्पनादिकं कृतवन्तः। सर्वकारेण अपि आहार-वसति-वस्त्र-वैद्यकीयसाहाय्यानि व्यवस्थापितानि।

न केवलं देशस्य जनेभ्यः, अपि तु विदेशीयेभ्यः अपि धनरूपेण वस्तुरूपेण च साहाय्यं प्राप्यमाणमस्ति। अस्माकं देशे जातस्य एतस्य भूकम्पस्य विषये समग्रे प्रपञ्चे अनुकम्पस्पन्दनं दृष्टम्।

भूकम्पस्य विविधानि कारणानि भवन्ति इति वदन्ति विज्ञानिनः। किन्तु भूकम्पः कदा सम्भवेत् इति ज्ञातुं कोऽपि मार्गः न अन्विष्टः अस्ति अद्यावधि। 'भूगर्भे स्थितं जलं यदा शुष्कं भवति तदा तत्र निर्वातता उत्पाद्यते, ततः भूमेः उपरिभागे विभेदाः, ततः भूकम्पः च सम्भवति' इति केषाञ्चित् विज्ञानिनाम् आशयः।

'मानवः जलार्थं भूगर्भकूपं खनति। भूमेः ऊर्ध्वभागं रक्षितुं समर्थैः मूलैः युक्तान् वृक्षान् यथेष्टं नाशयति। अतः एव एतादृश्यः प्रकृतिविकोपघटनाः सम्भवन्ति' इति अन्येषां केषाञ्चित् विज्ञानिनाम् अभिप्रायः।

अमेरिकादेशीयः चार्ल्स् रिक्टर् (१९००-१९८५) नामकः विज्ञानी भूकम्पतरङ्गतीव्रतायाः मापनार्थं मापकयन्त्रं सज्जीकृतवान्। अतः एव तस्य यन्त्रस्य नाम 'रिक्टर्-मापकम्' इति। इतः पूर्वं तु इटलीदेशस्य विज्ञानिना ग्लसेपी मेर्कालि (१८५०-१९१४) वर्येण सज्जीकृता 'मेर्कालिमापकम्' उपयुज्यमानम् आसीत्।

## महाभूकम्पाः

**भारते ..........**

* १७३७ अक्टोबर्-११ – कलकत्तानगरे – ३,००,००० जनाः मरणं प्राप्तवन्तः
* १९३४ जनवरी-१५ – भारत-नेपालसीमायाम् – (८.४) १०,००० जनाः मरणं प्राप्तवन्तः।
* १९३४ मे-३१ – क्वेट्टाप्रदेशे (यः इदानीं पाकिस्थाने अस्ति) – (७.५) ३०,००० जनाः मरणं प्राप्तवन्तः।
* १९४१ जून्-२६ – अन्दमान् द्वीपेषु – (८.१)।
* १९५० अगस्ट्-१५ – अस्सांराज्ये – (८.५)।

**प्रपञ्चे .........**

* अतिभीकरः भूकम्पः १२०१ तमे वर्षे पूर्व-मध्यप्रदेशे जातः, यस्य च परिणामतः ११,००,००० जनाः मरणं प्राप्तवन्तः आसन्।



# श्रेष्ठसम्पत्तिः

रामपुरनामके ग्रामे गङ्गाधरनामकः कश्चित् आसीत्। सः वृत्त्या वणिक्। तस्य पत्नी प्रसूत्यर्थं मातृगृहं गतवती आसीत्। पत्नी प्रसूतवती इति वार्तां श्रुत्वा एकस्मिन् प्रातःकाले गङ्गाधरः श्वशुरगृहं गतवान्। प्रसूतिकां पत्नीं पुत्रं च दृष्ट्वा सायङ्काले गृहं प्रत्यागतवान्। सायङ्काले गृहं प्रति आगमनसमये गङ्गधरः स्वगृहस्य पुरतः स्थितं कञ्चित् अश्वशकटं दृष्टवान्। गङ्गाधरस्य माता अन्नपूर्णा शकटस्य अन्तः विद्यमानैः सह वार्तालापं कुर्वती तान् सम्प्रेष्य गृहस्य अन्तः गतवती। गङ्गाधरः दूरतः एव एतत् सर्वं दृष्टवान्।

गृहम् आगतः गङ्गाधरः मातरं पृष्टवान्– "अस्मद्गृहं प्रति अश्वशकटेन कोऽपि आगतवान् आसीत् इति भाति। कौशेयवस्त्रेण आच्छादितः च आसीत् शकटः! कः आगतः आसीत्?" इति।

पुत्रस्य प्रश्नेन किञ्चिदिव विचलिता माता अन्नपूर्णा अनुक्षणम् आत्मानं निगृह्य उक्तवती– "मम बाल्यसखी आगतवती आसीत्। बहुकालतः आवयोः मेलनम् एव न जातं खलु! अतः सा मां दृष्टुम् आगतवती आसीत्" इति।

"भवत्याः तादृशी काचित् धनिका सखी अस्ति इति मां न उक्तवती एव खलु भवती!" इति साश्चर्यं पृष्टवान् गङ्गाधरः।

तदा अन्नपूर्णा उक्तवती– "मम सखी मध्यमवर्गीयकुटुम्बे एव जाता प्रवृद्धा च। अनन्तरकाले सौभाग्यवशात् धनिका जाता। अस्माकं स्थितिः अपि सा एव खलु। भवतः पिता यदा दिवङ्गतः, तदा पञ्चषाणि वर्षाणि मया महत् कष्टम् अनुभूतम्। इदानीं वयं सुखेन जीवनं यापयन्तः स्मः। जीवने

"अनामिका"

कष्टसुखादिकं तु अतीव सहजम्। अतः मया न उक्तम् आसीत् मम सखीविषये" इति।

गङ्गाधरः स्नानगृहं गत्वा पादौ प्रक्षालयन् मातरं पृष्टवान्– "सख्या सह कस्मिन् विषये भवत्याः जल्पनं प्रचलति स्म?" इति।

"सा जल्पनार्थम् न आगतवती। तस्याः एकमात्रस्य पुत्रस्य विवाहः निश्चितः अस्ति। आगामिसप्ताहे एव विवाहः। पुत्रस्य विवाहार्थम् आह्वानपत्रिकां दातुम् आगता आसीत्। दिनचतुष्टयात् पूर्वम् एव आगच्छन्तु इति मां सूचयित्वा गतवती सा" इति उक्तवती अन्नपूर्णा।

मातुः एतत् वचनं श्रुत्वा गङ्गाधरः किञ्चित् विचिन्त्य– "भवत्याः सखी धनिका स्यात् नाम। किन्तु विवाहतः दिनचतुष्टयात् पूर्वम् एव गमनम् तेषां क्लेशाय भवेत्। अस्माकम् अपि असौविध्यं भवति। अतः विवाहस्य पूर्वदिने गच्छाम" इति उक्तवान्। अन्नपूर्णा गङ्गाधरस्य वचनम् अङ्गीकृतवती। विवाहगमनपूर्वदिने अन्नपूर्णा वराय उपायनीकर्तुं स्वेन क्रीतानि वस्त्राणि पुत्राय गङ्गाधराय दर्शितवती।

एतत् दृष्ट्वा गङ्गाधरः मुखे असमाधानं खेदं च प्रकटयन् उक्तवान्– "वर्षात् आरभ्य अनारोग्येण पीडितां भवतीं नगरं नीत्वा उत्तमा चिकित्सा कारणीया इति विचिन्त्य अहं किञ्चित् धनं सञ्चितवान् आसम्। किन्तु तस्मिन् धने भवती वस्त्रनिमित्तम् एव पञ्चशतं रूप्यकाणि व्ययितवती। आरोग्यं प्रधानम्। अनन्तरम् अन्यत् सर्वम्" इति।



तदा अन्नपूर्णा किमपि अनुक्त्वा मौनं स्थितवती। अनन्तरदिने अन्नपूर्णा पुत्रेण गङ्गाधरेण सह विवाहार्थं प्रस्थितवती। सायङ्काले तौ विवाहगृहं प्राप्तवन्तौ। विवाहगृहे सर्वे अपि उत्तमानि नूतनानि वस्त्राणि धृतवन्तः आसन्। अतः तत्रत्यः कोऽपि सामान्यवस्त्रधारिणौ एतौ न स्वागतीकृतवान्। अन्नपूर्णा सखीम् इन्दुमतीं द्वित्रेषु स्थलेषु अन्विष्टवती। अन्ते सा मिलितवती। अन्नपूर्णां दृष्ट्वा सन्तुष्टा सखी इन्दुमती प्रीत्या तस्याः हस्तं गृहीत्वा– "इदानीम् आगतवती वा?" इति पृष्टवती।

"आम्। इदानीम् आगतम् आवाभ्याम्" इति वदन्ती "वरः कुत्र अस्ति?" इति पृष्टवती अन्नपूर्णा।

"आगच्छतु, दर्शयामि" इति वदन्ती इन्दुमती अन्नपूर्णां गङ्गाधरं च समीपे एव विद्यमानम् अपरं भवनं नीतवती। तस्मिन् भवने एकस्मिन् प्रकोष्ठे वरः सुधीरः तस्य स्नेहिताः च परस्परं वार्तालापं कुर्वन्तः उच्चैः हसन्ति स्म।

तस्मिन् समये तत्र आगतां मातरं दृष्ट्वा सुधीरः असमाधानं प्रकटयन् उक्तवान्– "अम्ब! अहं यदा मित्रैः सह भवामि तदा केनापि व्याजेन भवती मत्समीपे मा आगच्छतु इति वारं वारम् उक्तवान् अस्मि। तथापि भवती किमपि कार्यं निमित्तीकृत्य आगच्छति एव" इति।

पुत्रस्य कठोराणि वचनानि श्रुत्वा खिन्ना इन्दुमती पुत्रं सुधीरम् उक्तवती– "एषा मम





सखी भवन्तं द्रष्टुम् इष्टवती। तदर्थम् अहम् अत्र आगता" इति।

तदा सुधीरः– "अयोग्याः एव भवत्याः सख्यः" इति उक्तवान् अन्नपूर्णा-गङ्गाधरौ अनादरेण पश्यन्।

अन्नपूर्णा एतानि वचनानि श्रुत्वा अपि अश्रुतवती इव व्यवहरन्ती– "चिरं जीवतु वत्स! भवतः वैवाहिकजीवनं सुखमयं भवतु" इति आशीर्वादेन अनुगृह्य आत्मना आनीतानि वस्त्राणि तस्मै दत्तवती।

सुधीरः तानि वस्त्राणि परीक्षादृष्ट्या दृष्ट्वा– "एतत् उपायनीकुर्वत्या भवत्या उपकारः कृतः। विवाहनिमित्तम् अस्माकं सेवकाय वस्त्राणि न आनीतानि आसन्। एतानि तस्मै योग्यानि सन्ति" इति उक्त्वा सेवकम् आहूय तानि वस्त्राणि दत्तवान्।

अन्नपूर्णा इन्दुमत्याः मुखं दृष्टवती। इन्दुमती शिरः अवनमय्य स्थितवती आसीत्। ते मौनं ततः बहिः आगतवत्यौ। गङ्गाधरस्य मुखं कोपेन आरक्तम् आसीत्।

राजभवनसदृशे वधूगृहे विवाहः वैभवेन सम्पन्नः। वधूः कुरूपिणी आसीत्। सुधीरस्य मित्रैः वध्वाः कुरूपस्य विषये यदा किमपि उक्तं तदा सुधीरः– "किं करोमि? इदानीं यत् वाणिज्यं कुर्वन् अस्मि तेन मम तृप्तिः नास्ति। समुद्रवाणिज्येन प्रभूतं धनं प्राप्येत। किन्तु तदर्थं मूलधनरूपेण लक्षशः रूप्यकाणि विनियोक्तव्यानि। एतस्याः पिता पञ्चलक्षं रूप्यकाणि वरदक्षिणारूपेण ददामि इति उक्तवान्। यदा विवाहः निश्चितः तदा अन्यः कन्यापिता आगत्य– 'अष्टलक्षं रूप्यकाणि दीयन्ते। कृपया मम पुत्रीं परिणयतु' इति प्रार्थितवान्। यद्यपि सा एतस्याः अपेक्षयाऽपि कुरूपिणी, तथापि सा परिणीता चेत् अधिकं धनम् अलप्स्यत। वचनं दत्तम् इत्यतः अनन्यगतिकतया एषा परिणीता मया। सर्वं मम दौर्भाग्यस्य फलम्" इति खेदेन उक्त्वा निश्श्वसितवान्।

एतत् श्रुतवतः गङ्गाधरस्य मुखं तिरस्कारयुक्तं जातम्। अन्नपूर्णायाः नेत्राभ्याम् अश्रूणि आगतानि।

अनन्तरं गङ्गाधरः अन्नपूर्णा च

भाटकशकटेन ततः प्रस्थितवन्तौ। मार्गे अन्नपूर्णा मन्दस्वरेण रुदती अश्रूणि पुनः पुनः मार्जयन्ती च आसीत्। एतत् दृष्ट्वा गङ्गाधरः मातरम् उक्तवान्– "अम्ब! सुधीरस्य गृहे यत् अपमाननं जातं तत् स्मरन्ती भवती इतोऽपि अश्रूणि स्रावयति वा? अहङ्कार-धनयोः मदः तस्य। अलं रोदनेन। सर्वं विस्मर्तव्यं भवत्या" इति।



"सः सुधीरः कः इति जानाति वा भवान्?" इति अश्रूणि स्रावयन्ती एव पृष्टवती अन्नपूर्णा।

"भवत्या एव उक्तं खलु-सः मम सख्याः पुत्रः इति?" इति उक्तवान् गङ्गाधरः।

"सः न अन्यः, अपि तु भवतः अनुजः एव। एतावन्ति वर्षाणि अहम् एतत् रहस्यम् अन्तरङ्गे एव गोपितवती आसम्। अद्य निरोद्धुम् न शक्नोमि एव" इति उक्त्वा पूर्वतनघटनां विस्तरेण उक्तवती अन्नपूर्णा।

"यदा भवतः पिता दिवङ्गतः तदा अहं जीवननिर्वहणार्थं प्रतिवेशिगृहेषु कार्यं करोमि स्म। तदा भवतः अष्ट वर्षाणि। भवान् नारिकेलजलस्य विक्रयणं कुर्वन् आसीत्। भवतः अनुजस्य सुधीरस्य वर्षद्वयम्।

कदाचित् मध्याह्नसमये भाटकशकटेन स्वग्रामं प्रतिगच्छन्ती आसीत् इन्दुमती। तदा आतपस्य उग्रताकारणतः सा मूर्च्छां गतवती। किङ्कर्तव्यताविमूढः शाकटिकः समीपस्थस्य अस्माकं गृहस्य पुरतः शकटं स्थगितवान्। तत्समये भवान् गृहं प्रत्यागच्छन् आसीत्। मूर्च्छितां तां दृष्ट्वा भवान् प्रथमोपचारेण, शीतलजलसेचनेन, नारिकेलजलदानेन च तस्याः सेवां कृतवान्। सायङ्कालपर्यन्तं सा अस्माकं कुटीरे स्थितवती। विश्रान्तिकारणतः सा स्वस्था जाता। सा भवन्तं देवसमानं भावितवती।

गमनसमये सा माम् एकान्ते– "भवत्याः पुत्रः अद्य मां रक्षितवान्। अहं निस्सन्ताना। कोऽपि बालकः दत्तकरूपेण स्वीकरणीयः इत्यस्ति मम विचारः। एतं गङ्गाधरम् अहं दत्तकरूपेण स्वीकर्तुम् इच्छामि। भवती एतत् अङ्गीकुर्यात् वा? विचिन्त्य पञ्चदिनाभ्यन्तरे पत्रद्वारा मां सूचयतु" इति

उक्त्वा सङ्केतसहितं पत्रं मह्यं दत्तवती।

भवान् तदा मम साहाय्यम् आचरति स्म। भवान् दत्तः चेत् जीवननिर्वहणस्य क्लेशः अभविष्यत्। बालस्य सुधीरस्य पोषणे अहं तदा कष्टम् अनुभवन्ती आसम्। 'अतः सुधीरः दत्तः चेत् उभयत्र अपि वरं स्यात्' इति आलोच्य अहं सुधीरस्य दत्तकरूपेण दानम् अङ्गीकृतवती। धनुर्मासे तलकावेरीस्नानस्य व्याजेन गृहात् निर्गत्य सुधीरम् इन्दुमत्यै दत्तवती।

"एषः अल्पवयस्कः बालः। एतम् अहं स्वपुत्रत्वेन पोषयिष्यामि। बाल्यस्य स्मरणम् अस्थिरम् इत्यतः एषः इतः परं माम् एव मातरं मन्यते। अतः भवत्या इतः परं कदापि अत्र न आगन्तव्यम्" इति उक्त्वा इन्दमती मह्यं दशसहस्रं रूप्यकाणि दातुम् उद्युक्ता।

अहं तस्य धनस्य स्वीकरणं निराकृत्य— "अहं मम पुत्रं विक्रेतुं न इच्छामि। एतस्य भाविजीवनम् उज्ज्वलं भवतु इति उद्देशेन मनः कठिनीकृत्य भवत्यै एतं यच्छन्ती अस्मि। एतस्य विवाहार्थं वा भवती माम् आह्वयतु। अक्षतार्पणैः आशीर्वादं संसूच्य प्रतिगमिष्यामि" इति उक्तवती आसम्।

एवं पूर्ववृत्तान्तं निवेद्य पुनः पुत्रम् उक्तवती अन्नपूर्णा— "इदानीं सुधीरस्य या सम्पत्तिः अस्ति सा वस्तुतः भवतः एव स्यात्। यतः इन्दुमती भवन्तम् एव दत्तकरूपेण इष्टवती आसीत्" इति।

तदा गङ्गाधरः हसन् उक्तवान्— "सर्वं दृष्ट्वा अपि एवं वदति खलु भवती? सुधीरस्य जीवनं पश्यतु। महती सम्पत्तिः अस्ति चेदपि न तृप्तिः। धनाशया सः कुरूपिणीं परिणीतवान्। तथापि अतृप्तिः— इतोऽपि अधिकं धनं दातुं सिद्धस्य पुत्री न परिणीता इति। एवं तस्य जीवने सदा अतृप्तिः एव। वस्तुतः तृप्तिः एव जीवनस्य सारः। सा तृप्तिः मम जीवने अस्ति। किम् अन्यसम्पत्त्या? तृप्तिः एव श्रेष्ठा सम्पत्तिः" इति।

एतत् श्रुत्वा मन्दहासपूर्वकं शिरः उन्नीय पुत्रं साभिमानं दृष्टवती अन्नपूर्णा।





# विचित्रं पुष्पम्

## ८

(शतरब्दिकापुष्पाणि नौकायाम् आरोप्य समुद्रप्रयाणं कुर्वता उत्तुङ्गेन मध्यरात्रसमये समुद्रमध्ये राक्षसमृगः दृष्टः। आत्मरक्षणार्थं भूप्रदेशम् अन्विष्यन् उत्तुङ्गः महातरङ्गेण केनचित् द्वीपे पातितः। तस्य नौका अपि द्वीपे पतिता। श्रान्तिनिवारणार्थं नेत्रे निमील्य निद्रावशं गतस्य उत्तुङ्गस्य समीपम् आगत्य काश्चन युवतयः शताब्दिकापुष्पाणि स्वीकृत्य स्ववसतिं प्रति प्रस्थिताः। उत्तुङ्गः ताः अनुसृत्य गतवान्। तदनन्तरम्....)

उपवेशनार्थं कटं प्रदर्श्य सः दृढकायः उत्तुङ्गं पृष्टवान्– "शृङ्गमयपर्वतात् एतावद्दूरं कथं भवान् एकाकितया आगतवान्?" इति।

उत्तुङ्गः कटे उपविशन् उक्तवान्– "अहं माणिक्यपुर्याः दक्षिणप्रान्ततः ह्यः सायङ्काले नौकया प्रस्थितवान्। प्रातःकालसमये महातरङ्गः कश्चन मां मम नौकां च तीरे अपातयत्। ततः अहम् एतं प्रदेशं प्राप्तवान्। अन्यथा अत्र आगन्तव्यम् इति मम पूर्वयोजना तु न आसीत्" इति।

तावता कुटीरस्य अन्तर्भागतः आगता काचित् महिला पानीयविशेषेण पूर्णं विशालमुखं पात्रम् आनीय एतयोः पुरतः स्थापयित्वा प्रतिगतवती।

सः दृढकायः एकं पात्रं स्वीकृत्य अपरं



तीरे पतितः अहं तावता एव नितरां श्रान्तः आसम्। अतः विश्रान्त्यर्थम् अहम् उपविश्य नेत्रे निमीलितवान्। यदा अहं जागरितः तदा मां परितः काश्चन युवतयः आसन्। मया नौकया आनीतानि पुष्पाणि सर्वाणि तासां हस्ते आसन्। तासां कथनस्य आशयः मया किञ्चिदपि न ज्ञातः। किन्तु तासां हस्तसङ्केतादिकम् अवगच्छन् अहं ताः अनुसरन् अत्र आगतवान्" इति।

अन्तः गता महिला तावता बहिः आगत्य पुष्पबन्धं दृढकायस्य पुरतः स्थापयन्ती— "कौभव! अस्माकं पुत्री एतानि पुष्पाणि आनीतवती। सुन्दराणि खलु एतानि?" इति पृष्टवती।

"सुन्दराणि एव। किन्तु एतानि अस्माकं पुत्री किमर्थम् आनीतवती?" इति पृष्टवान् सः दृढकायः।

"एतानि अपूर्वं सौगन्ध्यं प्रसारयन्ति खलु? अतः आनीतवती सा" इति उक्तवती सा महिला।

"एषः तरुणः एतानि कुत्रापि नयन् आसीत्। तन्मध्ये एताभिः तानि आनीतानि यत् तत् अनुचितं खलु?" इति पृष्टवान् दृढकायः।

सा महिला उत्तरं किमपि अयच्छन्ती मौनं ततः निर्गतवती। तस्याः वचनस्य तात्पर्यं यद्यपि न ज्ञातम् उत्तुङ्गेन, तथापि दृढकायस्य पुरुषस्य नाम कौभवः इति तु तस्याः

प्रदर्शयन् उत्तुङ्गम् उक्तवान्— "भवान् स्वीकरोतु एतत्" इति।

"यदा अहम् अत्र आगतः तदा पानीयं किञ्चित् दत्तम् आसीत्। तस्य स्वीकरणात् एव मम उदरं पूर्णम् इव" इति वदन् उत्तुङ्गः पानीयपात्रं गृहीतवान्।

"भवान् अत्र कथम् आगतवान्?" इति पृष्टवान् सः दृढकायः।

"अहं स्वयम् अत्र न आगतः। अन्याभिः आनीतः" इति उक्तवान् उत्तुङ्गः।

"काः भवन्तम् आनीतवत्यः?" इति पुनः पृष्टवान् सः दृढकायः।

पात्रस्थं पानीयं पीत्वा पात्रम् अधः स्थापयन् उक्तवान् उत्तुङ्गः— "नौकया सह

सम्बोधनात् ज्ञातम्।

"एतानि शताब्दिकापुष्पाणि इति उच्यन्ते। कस्यचित् प्रमुखकार्यस्य निमित्तम् एतानि पुष्पाणि दूरप्रदेशं नयन् अस्मि" इति उक्तवान् उत्तुङ्गः।

"भवतां माणिक्यपुर्याः समीपे स्थितस्य अस्माकं देशस्य नाम 'नागपुरी' इति। भवता इतोऽपि कियद्दूरं गन्तव्यम्? तावता एतानि पुष्पाणि म्लानानि न भवेयुः वा?" इति पृष्टवान् कौभवः। उत्तुङ्गस्य मुखात् सर्वं श्रोतुम् उत्सुकः आसीत् सः।

उत्तुङ्गः अपि स्वप्रयाणस्य कारणं गोपयितुम् अनिच्छन् सर्वं सङ्ग्रहेण कौभवम् उक्तवान्।



"मध्येसमुद्रं घोरस्य राक्षसमृगस्य सम्मुखीकरणार्थम् उद्युक्तस्य भवतः प्रयत्नः तु नितरां श्लाघ्यः। अपायग्रस्तानां प्रजानां कष्टं परिहर्तुं प्रयत्नशीलः भवान् अनुकरणीयः पुरुषः। तस्मात् राक्षसमृगात् अस्माकं नागपुर्याः कोऽपि अपायः न भवति एव। राज्यसीमायां स्थिताः उन्नताः पर्वताः दुर्गम् इव सन्ति। प्रकृत्या अनुगृहीतः वरः एषः। अतः एव शत्रुभयरहिताः वयं सुखेन जीवामः" इति उक्तवान् कौभवः।

"सत्यम्। किन्तु माणिक्यपुर्याः तु एतादृशः वरः नास्ति। तस्याः सुदीर्घं समुद्रतीरम् अस्ति। अतः सः राक्षसमृगः आगत्य बहुधा कष्टानि ददाति। अतः मम विचारः यत् एतानि शताब्दिकापुष्पाणि राक्षसमृगस्य वासस्थानं प्रापणीयानि इति। एतद्विषये अन्यः मार्गः न स्फुरति" इति उक्तवान् उत्तुङ्गः।

"एतेषां शताब्दिकापुष्पाणां सङ्ग्रहार्थं सर्वे ते वृक्षाः पातिताः इति, शतस्य वर्षाणाम् अनन्तरम् एव ते वृक्षाः पुष्प्यन्ति इति च इदानीम् एव भवता उक्तं खलु? अतः शताब्दिकापुष्पाणां निमित्तं सः राक्षसमृगः पुनः माणिक्यपुरीं प्रति न आगच्छेत् इति भाति मम" इति उक्तवान् कौभवः।

"भवता तर्कितं युक्तम् एव। किन्तु राज्यस्य समीपे तस्य राक्षसमृगस्य वासः न उचितः खलु? यावत् सः राज्यसमीपे तिष्ठति



तावत् अपायस्य सम्भावना भवति एव। अतः तं ततः सुदूरं प्रेषयितुम् अस्माकं प्रयत्नः" इति उक्तवान् उत्तुङ्गः।

"भवतां चिन्तनं प्रयत्नः चापि श्लाघ्यम् एव। राक्षसमृगः भवद्देशसमीपं यथा न आगच्छेत् तथा कर्तुम् अन्यः कोऽपि उपायः स्यात् वा इति चिन्तनम् अपि युक्तम् एव। यदि अस्माकं राज्ञा सह एतद्विषये समालोचनं क्रियेत तर्हि वरम् इति मम आशयः। अतः अद्य एव भवन्तं अस्मद्राजस्य महेन्द्रसिंहस्य समीपं नेष्यामि" इति उत्तुङ्गम् उक्त्वा अङ्गुल्या द्वारं द्वित्रवारं ताडितवान्।

तदा अन्तर्भागतः महिला आगतवती। कौभवः तां किमपि उक्तवान्। सा एतयोः पुरतः आहारपदार्थान् आनीय स्थापितवती। अन्या ताम् अनुसृत्य आगत्य भोजनपात्रादिकं स्थापयित्वा प्रतिगन्तुम् उद्युक्ता। तदा कौभवः ताम् आहूतवान्- "वत्से! चित्रलेखे!" इति।

गमनं स्थगयित्वा मुखं परिवृत्य पृष्टवती सा तरुणी- "किं तात!" इति।

"आगच्छतु अत्र" इति ताम् उक्त्वा उत्तुङ्गं पश्यन्- "एषामम पुत्री चित्रलेखा" इति उक्त्वा चित्रलेखां पश्यन् पृष्टवान्- "अन्याः कुत्र?" इति।

चित्रलेखा अङ्गुल्या द्वारं द्वित्रवारं मन्दं ताडितवती। तदा पञ्च युवतयः प्रकोष्ठात् बहिः आगतवत्यः।

कौभवः उत्तुङ्गम् उद्दिश्य- "एताः सर्वाः चित्रलेखायाः सख्यः" इति उक्त्वा ताः पश्यन्- "एतानि पुष्पाणि किमर्थं भवत्यः नौकातः आनीतवत्यः?" इति पृष्टवान्।

"पुष्पाणि तु नितरां मनोहराणि। सौगन्ध्यम् अपि अपूर्वम्। अतः वयम् आनीतवत्यः" इति उत्तरं दत्तवत्यः ताः।

"भवतु तावत्" इति उक्तवान् कौभवः। ताः युवतयः ततः अन्तः गतवत्यः।

भोजनं समाप्य कौभवः उत्तुङ्गः चापि राजदर्शनार्थं प्रस्थितवन्तौ। कौभवस्य पत्नी पुत्री चापि द्वारपर्यन्तम् आगत्य एतयोः शुभप्रयाणम् आशंसितवत्यौ।

यदा वसतिप्रदेशः अतिक्रान्तः तदा कौभवः

स्वहस्ते स्थितं पुष्पबन्धम् उत्तुङ्गाय यच्छन्– "एषः बन्धः भवतः हस्ते भवतु" इति उक्त्वा अग्रे प्रस्थितवान्। उत्तुङ्गः पुष्पाणि गृहीत्वा मौनं कौभवम् अनुसृतवान्।

एवं गच्छन्तौ तौ पर्वतान्, नदीः, विशालप्रदेशान् च अतिक्रम्य नागपुर्याः राजधानीं प्राप्तवन्तौ।

यदा एतौ राजधान्यां मार्गेण गच्छन्तौ आस्तां तदा बहवः कौभवं कुशलप्रश्नान् पृष्टवन्तः। पुनः केचन आदरेण नमस्कृतवन्तः। अभिमुखम् आगताः मार्गात् अपसृत्य तस्य गमनार्थम् अवकाशं कल्पितवन्तः। कौभवस्य गम्भीरा आकृतिः, आजानुबाहुत्वं, शिरसि स्थितं लघु नागकिरीटं, विचित्रः वेषः, हस्तस्थं शूलं च द्रष्टृषु भयमिश्रितम् आदरं जनयन्ति स्म।

यदा तौ राजप्रासादसमीपं गतवन्तौ तदा रक्षकभटौ कौभवं नमस्कृतवन्तौ। कश्चन भटः तम् आदरेण अन्तः नीतवान्। मार्गम् उभयतः उन्नताः विशालाः स्तम्भाः आसन्। भटः एतौ मुखद्वारसमीपे स्थगयित्वा अन्तः गत्वा एतयोः आगमनं राजानं निवेद्य राज्ञः अनुज्ञां प्राप्य अन्तः नीतवान्।

उन्नतासने उपविष्टः राजा मन्त्रिभिः सह समालोचनं कुर्वन् आसीत्। राजानं दृष्ट्वा कौभवः विनयेन नमस्कृतवान्।

"कौभव! भवतः प्रदेशे वसन्तः सर्वे जनाः कुशलिनः खलु?" इति मन्दहासपूर्वकं



पृष्टवान् राजा।

"भवतः दयया सर्वं कुशलं महाप्रभो" इति उक्तवान् कौभवः।

राज्ञः दृष्टिः उत्तुङ्गस्य उपरि पतिता। उत्तुङ्गः हस्तौ योजयित्वा राजानं नमस्कृतवान्।

"एषः युवकः माणिक्यपुरीतः आगतः अस्ति। एतस्य नाम उत्तुङ्गः इति" इति उत्तुङ्गस्य परिचयम् उक्तवान् कौभवः।

"एवं वा? मित्र! भवतां राजा प्रतापवर्मा कुशली खलु?" इति पृष्टवान् राजा।

"आं महाराज!" इति विनयेन उत्तरं दत्तवान् उत्तुङ्गः।

राजा पार्श्वस्थम् आसनद्वयम् अङ्गुल्या



निर्दिष्टवान्। उभौ अपि आसने उपविष्टवन्तौ।

"उत्तुङ्गः अनिरीक्षितरूपेण अस्माकं राज्यम् आगतवान् अस्ति" इति वदन् कौभवः उत्तुङ्गस्य हस्तात् पुष्पबन्धं स्वीकृत्य राज्ञः पुरतः स्थापितवान्।

"भवतोः आगमनस्य समनन्तरम् एव कश्चन विशेषगन्धः आघ्रातः। तत्र कारणम् एतानि एव वा?" इति पृष्टवान् राजा।

"उत्तुङ्गः एतानि शृङ्गमयपर्वतात् आनीतवान् अस्ति। एवं हि श्रूयते यत् एतानि शते वर्षेषु एकवारं विकसितानि भवन्ति इति। अतः एव एतेषां नाम शताब्दिकापुष्पाणि इति" इति उक्तवान् कौभवः।

"एवं वा? माणिक्यपुर्याः राजा प्रतापवर्मा तावद्दूरतः एतानि अस्मदर्थं प्रेषितवान् वा?" इति आश्चर्येण पृष्टवान् राजा।

"न महाप्रभो" इति उक्त्वा शताब्दिकापुष्पाणां कारणतः माणिक्यपुर्याः उपरि आपतिताम् आपदं, राक्षसमृगम् अन्विष्य प्रस्थितवतः उत्तुङ्गस्य प्रयाणस्य विषयं च सङ्ग्रहेण निरूपितवान् कौभवः। "एतद्विषये भवतः मार्गदर्शनं प्राप्तं चेत् वरं स्यात् इति आलोच्य एतम् अत्र आनीतवान् अस्मि" इति उक्तवान् सः।

"प्रजानां हितार्थम् उत्तुङ्गः यत् कार्यं कृतवान् तत् नितरां श्लाघ्यम् एव। किन्तु एतदर्थम् एकाकितया एतस्य गमनं निश्चयेन आपायकरम्। अतः एतस्य साहाय्यार्थं वयं कांश्चन वीरान् तरुणान् एतेन सह प्रेषयाम" इति उक्तवान् राजा।

तावता पञ्चदशवर्षीया काचित् तरुणी तत्र आगत्य– "तात ! एतानि पुष्पाणि कुतः आनीतानि? रमणीयानि सन्ति एतानि" इति उक्तवती।

राजा तां प्रीत्या स्वसमीपम् आकृष्य– "एषः युवकः माणिक्यपुरीतः एतानि पुष्पाणि भवत्याः निमित्तम् आनीतवान् अस्ति" इति मन्दहासपूर्वकम् उक्तवान्।

"सत्यं वा? मदर्थम् आनीतानि वा एतानि?" इति आश्चर्येण सन्तोषेण च उत्तुङ्गं पृष्टवती सा तरुणी।

किमिति उत्तरं वक्तव्यम् इति अजानन् उत्तुङ्गः मन्दहासं प्रकटितवान्, तावदेव।

"एषा मम पुत्री मल्लिका। पुष्पाणि तु एतस्याः प्राणप्रियाणि" इति उत्तुङ्गं पश्यन् उक्तवान् राजा।

"आं युवराज्ञि! एतानि भवत्याः निमित्तम् एव आनीतानि" इति उक्तवान् उत्तुङ्गः।

"तर्हि एतानि अहं नयामि तात!" इति पितरम् उक्तवती राजकुमारी मल्लिका।

"अस्तु, भवती नयतु। अहम् अनन्तरं भवत्याः भवनम् आगमिष्यामि" इति उक्तवान् राजा। मल्लिका पुष्पबन्धं स्वीकृत्य सन्तोषेण ततः निर्गतवती।

"एतस्य पुष्पस्य पृष्ठभूमौ स्थितः शापवृत्तान्तः, राक्षसपीडावार्ता वा राजकुमार्या न ज्ञातव्यः" इति स्वगतम् इव वदन् राजा– "कौभव! भवन्तौ अद्य अत्रैव वसताम्। राक्षसमृगविषये किं करणीयम् इति श्वः निश्चिनुमः" इति उक्त्वा ततः उत्थाय अन्तःपुरम् उद्दिश्य गतवान्।

यावत् राजा दृष्टिपथे आसीत् तावत् मन्त्रिणः, सभ्याः, कौभवः, उत्तुङ्गश्चापि स्थितवन्तः आसन्। राज्ञः निर्गमनस्य अनन्तरं कश्चन मन्त्री– "भवन्तौ माम् अनुसरताम्। भवतोः वसतिस्थानं प्रदर्शयिष्यामि" इति तौ एकं विशालं प्रकोष्ठं प्रति नीत्वा– "भवन्तौ अत्रैव विश्रान्तिसुखम् अनुभवताम्। श्वः राजा यावत् न आह्वयति तावत् भवतोः विश्रान्तिः भवतु। सेवकाः सर्वविधव्यवस्थाः करिष्यन्ति" इति उक्त्वा ततः गतवान्।

मन्त्रिणः गमनस्य अनन्तरं स्वल्पे एव काले कश्चन राजभटः आगत्य निवेदितवान्– "येन युवकेन पुष्पाणि आनीतानि तम् अहं द्रष्टुम् इच्छामि इति युवराज्ञी उक्तवती अस्ति" इति।

उत्तुङ्गः आश्चर्येण कौभवस्य मुखं दृष्टवान्। तदा कौभवः– "भवान् गत्वा तां पश्यतु। किन्तु राज्ञः सूचना मनसि भवतु" इति उक्तवान्। –(अनुवर्तते)





मृगधर्मः
'कार्यस्य फलं सिध्यति चेत् सन्तोषः, नो चेत् दुःखं तु नास्ति। कार्यप्रवृत्तिः तु मम कर्तव्यम्' इति चिन्तयन् त्रिविक्रमः शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "हे राजन्! अस्मिन् भयङ्करे अन्धकारे भवान् किं कार्यं साधयितुम् उद्युक्तः अस्ति? किमपि महत् साहसं कर्तुम् इच्छन् भवान् समस्याकूपे पतति वा इति मम सन्देहः। एतादृशे कार्ये कः भवन्तं प्रेरितवान्? यदि कश्चित् राजा न्यायाधिकारी वा भवन्तं प्रेरितवान् स्यात् तर्हि भवता जागरूकेण भवितव्यम्। यतः कस्यचित् राज्ञः वा न्यायाधिकारिणः वा सर्वे निर्णयाः उत्तमाः न भवन्ति। उदाहरणार्थं रामभद्रनामकस्य न्यायाधिकारिणः कथां श्रावयामि। श्रद्धया शृणोतु।" इति।
अनन्तरं वेतालेन कथा आरब्धा–
वेतालकथा



पुष्पगिरिनामके राज्ये कश्चन ग्रामः। तस्मिन् ग्रामे वीरेशः नाम कश्चित् आसीत्। तस्य पुत्रः चन्द्रकान्तः। बाल्यात् अपि चन्द्रकान्तस्य सङ्गीते विशेषाभिरुचिः।

चन्द्रकान्तः यदा पञ्चवर्षीयः जातः तदा कश्चन संन्यासी चन्द्रकान्तं दृष्ट्वा पितरं वीरेशम् उक्तवान्— ''भवतः पुत्रस्य मुखदर्शनेन ज्ञायते यत्— एतस्मिन् वाग्देव्याः सरस्वत्याः अनुग्रहः अस्ति इति। अतः एतस्य सङ्गीताभ्यासं कारयतु। सङ्गीतविद्यायाः महान् पण्डितः भविष्यति एषः'' इति।

संन्यासिनः एतानि वचनानि वीरेशाय न अरोचन्त। 'कृषिकार्येण सुखेन जीवितुं शक्यते। सङ्गीताध्ययनेन न किमपि प्रयोजनम्' इति वीरेशस्य अभिप्रायः। अतः— 'सङ्गीताभ्यासः मास्तु। भवान् कृषिकार्यम् एव करोतु'' इति पुत्रं बोधितवान् वीरेशः।

चन्द्रकान्तः पितरम् उक्तवान्— ''सङ्गीतविषये एव मम विशेषासक्तिः। अहं सङ्गीताभ्यासम् एव करोमि'' इति। पुत्रस्य वचनेन कुपितः पिता चन्द्रकान्तं प्रकोष्ठे स्थापयित्वा कीलितवान्। दिनद्वयं पुत्राय भोजनम् अपि न दत्तवान्। बुभुक्षां सोढुम् अशक्तः चन्द्रकान्तः पितुः वचनम् एव अङ्गीकृतवान्।

कानिचन वर्षाणि अतीतानि। चन्द्रकान्तः षोडशवर्षीयः जातः। तेषु दिनेषु सः उत्तमः कृषकः इति प्रसिद्धिं प्राप्तवान्। तस्मिन् ग्रामे प्रतिवर्षम् अपि वीरेशस्य क्षेत्रे एव फलसमृद्धिः अधिका भवति स्म।

एवं स्थिते कदाचित् सः ग्रामः क्षामेण पीडितः जातः। वर्षद्वयं यावत् धान्यादिकं किमपि वर्धयितुम् अशक्तः वीरेशः ऋणं कृतवान्। तस्य ग्रामस्य एव कश्चित् वणिक् वीरेशाय ऋणं यच्छन् आसीत् वर्षद्वयतः। 'इतःपरं वीरेशः मम धनं न प्रत्यर्पयति' इति चिन्तयित्वा सः वणिक् वीरेशस्य क्षेत्रं स्वायत्तीकृतवान्। अनन्यगतिकः वीरेशः तं ग्रामं त्यक्त्वा सपरिवारं नगरं प्रति प्रस्थितः।

मध्येमार्गं श्रान्ताः वीरेशस्य परिवारजनाः कस्यचित् वृक्षस्य अधः विश्रान्तिं स्वीकर्तुम् इष्टवन्तः।

तस्मिन् समये व्रणितः कश्चन वानरशिशुः तस्मात् वृक्षात् अधः पतितः। वीरेशः तं वानरं गृहीत्वा तस्य व्रणादिकं स्वच्छीकृत्य किमपि औषधं लेपितवान्। स्वसमीपे विद्यमानानि फलानि वानराय खादितुं दत्तवान्। वानरशिशुः धन्यताभावेन वीरेशेन सह एव स्थितवान्। वीरेशः तं वानरशिशुं रज्ज्वा बध्वा स्थापितवान्।

अनन्तरं वीरेशः ततः प्रस्थाय नगरं प्राप्तवान्। नगरे वासस्थानं कुत्रापि अलभमानः वीरेशः कस्यचित् वृक्षस्य अधः एव वासम् आरब्धवान्। चन्द्रकान्तः कार्यम् अन्विष्यन् सर्वत्र अटति स्म। केषुचित् एव दिनेषु वीरेशः वानराय क्रीडाः पाठयितुम् आरब्धवान्। आरम्भदिनेषु वानरः स्वामिनः वीरेशस्य वचनं न शृणोति स्म। तदा वीरेशः वानरं सम्यक् ताडयति स्म। तस्मै आहारं न ददाति स्म अपि। वानरः स्ववचनं पालयति चेत् तस्मै यथेष्टं खादितुम् आहारं ददाति स्म। एवं सप्ताहाभ्यन्तरे एव वानरः काश्चन क्रीडाः अभ्यस्तवान्।

वीरेशः तं वानरं नगरे तत्र तत्र नीत्वा क्रीडाप्रदर्शनम् आरब्धवान्। वानरक्रीडां द्रष्टुं बहवः जनाः आगच्छन्ति स्म। एतेन वीरेशः धनं सम्पादयितुम् आरब्धवान्।

चन्द्रकान्तः यद्यपि आदिनं किमपि कार्यं करोति, तथापि सः अधिकं धनं सम्पादयितुं न शक्तवान्।

एकस्मिन् दिने वीरेशः क्रीडयति स्म। चन्द्रकान्तः एतत् दृष्ट्वा पितरम् उक्तवान्—





"एषा वानरक्रीडा अतीव सुन्दरी एव अस्ति। किन्तु किञ्चित्कालानन्तरं प्रेक्षकाणां जामिता भवेत्। यतः सर्वदा समानाः भवन्ति वानरक्रीडाः। अतः अहं डिण्डिमं वादयन् गीतं गायामि। तदनुगुणम् एव वानरं नृत्यं पाठयामः। एतेन प्रेक्षकाणां जामिता न भविष्यति" इति।

वीरेशः पुत्रस्य वचनम् अङ्गीकृतवान्। वीरेशः चन्द्रकान्तः च वानरं नृत्यं पाठितवन्तौ। नृत्यपूर्वकवानरक्रीडाप्रदर्शनेन वीरेशस्य सम्पादनं दशगुणितम् अधिकं जातम्। तेन वीरेशस्य कुटुम्बं सुखेन जीवति स्म।

कदाचित् वानरनृत्यप्रदर्शनं नगरे कुत्रचित् प्रचलति स्म। चन्द्रकान्तः गायन् आसीत्। तस्मिन् समये तेन मार्गेण गच्छन् कश्चित् सङ्गीतविद्वान् चन्द्रकान्तं समीपम् आहूय उक्तवान्– "भवतः कण्ठमाधुर्यम् अपूर्वम् अस्ति। गानेऽपि उत्तमः क्रमः अस्ति। भवन्तं अहं सङ्गीतं पाठयिष्यामि। मया सह आगच्छतु भवान्" इति।

तेन सङ्गीतविदुषा सह गन्तुं चन्द्रकान्तः इष्टवान्। किन्तु वीरेशः न इच्छति। अतः चन्द्रकान्तः पितुः वचनं तृणीकृत्य सङ्गीतविदुषा सह गतवान्। पुत्रः गतवान् इति वीरेशः अतीव खिन्नः।

वर्षद्वयम् अतीतम्। वानरनृत्यप्रदर्शनेन सम्पादितेन धनेन वीरेशः लघु कुटीरं क्रीतवान्। इदानीं तु धनाभावः नास्ति। दिनानि सुखदायकानि सन्ति। तथापि पुत्रः समीपे नास्ति इति दुःखम् अस्ति।

कश्चित् धनिकः एकस्मिन् दिने वीरेशाय वार्तां प्रेषितवान्– "भवता मम गृहम् आगत्य वानरनृत्यप्रदर्शनम् आयोजनीयम्। अहं द्रष्टुम् इच्छामि। एतदर्थम् एकसहस्रं रूप्यकाणि दास्यामि" इति।

वीरेशः सन्तोषेण एतत् अङ्गीकृत्य धनिकस्य गृहं गतवान्। धनिकस्य पुरतः नृत्यप्रदर्शनं कारितवान् च। सः धनिकः वानरनृत्यं प्रशंसन्– "भवान् इतोऽपि मां न अभिज्ञातवान्। अहं भवतः पुत्रः चन्द्रकान्तः। भवतः सकाशात् ऋणमुक्तः भवितुम् इच्छन्

अहं भवन्तम् अत्र आहूतवान्। स्वीकरोतु, एतानि रूप्यकाणि" इति वदन् सहस्रं रूप्यकाणि दत्तवान् वीरेशाय।

तदा वीरेशः पुत्रम् अभिज्ञातवान्। साश्चर्यं पृष्टवान् च– "वत्स! भवान् गृहं प्रति आगच्छति इति अहं बहु प्रतीक्षां कृतवान्। भवतु नाम। भवान् एतावान् धनिकः कथं जातः?" इति।

तदा– "यः सङ्गीतविद्वान् मां नीतवान् सः षट्सु मासेषु एव मां सङ्गीतविद्यां सम्यक् बोधितवान्। अनन्तरकाले मम सङ्गीतस्य राजमान्यता अपि लब्धा। द्विवारं मम कनकाभिषेकः अपि जातः। शतं वर्षाणि विनोद्योगं जीवितं चेदपि मम सम्पत्तिः न्यूना न भविष्यति। तावत् धनं सम्पादितवान् अस्मि अहम्" इति उक्तवान् चन्द्रकान्तः।

चन्द्रकान्तस्य वचनं श्रुत्वा वीरेशः महता सन्तोषेण उक्तवान्– "भवान् महान् धनिकः जातः अस्ति। यथेष्टं सम्पादितवान् अस्ति अपि। अतः भवतः पित्रा मया इतःपरं वानरनृत्यप्रदर्शनेन जीवितव्यं नास्ति खलु! एतं विषयं जानाति चेत् भवतः माता अतीव सन्तुष्टा भवति" इति।

तदा चन्द्रकान्तः– "भवान् यथाकथमपि जीवतु। मम सम्बन्धः नास्ति। भवता वा, मात्रा वा मम गृहं न आगन्तव्यम्। यदि अहं मातरं द्रष्टुम् इच्छामि तर्हि अहम् एव भवतोः समीपम् आगमिष्यामि। भवान् बाल्यात् मां पोषितवान् इति कारणतः सहस्रं रूप्यकाणि दत्त्वा ऋणमुक्तः जातः अस्मि अहम्"





एतत् सर्वं श्रुत्वा न्यायाधिकारी कर्मकरद्वारा चन्द्रकान्तम् आनायितवान्।

न्यायालयम् आगतः चन्द्रकान्तः किं किं प्रवृत्तम् इति समग्रं न्यायाधिकारिणं निवेदितवान्।

प्रकरणं समग्रं परिशील्य न्यायाधिकारी– "यः चन्द्रकान्तं सङ्गीतविद्यां पाठितवान् तं सङ्गीतगुरुम् एव पितरं मन्यते चन्द्रकान्तः। अतः सः सङ्गीतगुरोः कुटुम्बम् एव पोषयन् अस्ति। एतत् कार्यम् उत्तमम् एव। किन्तु जन्मदातृभ्यां मातापितृभ्यां सहस्रं रूप्यकाणि दत्त्वा ऋणमुक्तः अहम् इति वचनं तु उचितं न भवति। अतः चन्द्रकान्तेन मातापितृभ्याम् एकः वानरशिशुः दातव्यः" इति निर्णयं श्रावितवान्।

इत्युक्त्वा ततः उत्थाय गतवान्।

वीरेशः ततः गृहं गतवान्। प्रवृत्तं सर्वं पत्नीं निवेदितवान्। अतीव कुपिता सा पतिम् उक्तवती– "मातापित्रोः विषये एव हीनभावः तस्य। मातापितृभ्याम् एव गृहं न आगन्तव्यम् इति उक्तवान् सः। अतः एतद्विषये आवां न्यायाधिकारिणं निवेदयाव" इति।

वीरेशः पत्न्याः वचनम् अङ्गीकृतवान्। अनन्तरदिने सः पत्न्याः सह न्यायालयं गतवान्। सर्वं विषयं न्यायाधिकारिणं निवेदितवान्। वीरेशस्य पत्नी अपि अश्रूणि स्रावयन्ती स्वदुःखं न्यायाधिकारिणं निवेदितवती।

बेतालः एवं कथां समाप्य अवदत्– "राजन्! पुत्रेण मातापितरौ गौरवेण द्रष्टव्यौ खलु? चन्द्रकान्तः यद्यपि महान् धनिकः, तथापि मातापित्रोः पोषणदायित्वं विस्मृतवान्। अतः सः पितृद्रोही किल? मातापित्रोः पोषणम् एकं पवित्रं कार्यम् इति न केवलं पण्डिताः, सामान्याः जनाः अपि मन्यन्ते। एवं सति वानरदानेन मातापित्रोः ऋणात् मुक्तिः भविष्यति इति कथम् उक्तवान् न्यायाधिकारी? न्यायाधिकारी अविवेकी खलु? धर्माधर्मं ज्ञातुम् अशक्ताः तादृशाः न्यायाधिकारिणः न्यायपीठम् अलङ्कुर्वन्ति इत्येतत् महत् अपमानकरं

खलु? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''ये मातापितरः पुत्राणां मनोभावं शक्तिसामर्थ्यं च ज्ञात्वा पुत्रान् प्रोत्साहयन्ति, ते एव मानवधर्मपालकाः। वीरेशः पुत्रस्य मनोभावं शक्तिसामर्थ्यम् वा अवगन्तुं प्रयत्नम् एव न कृतवान्। अपि तु पुत्रं बलात् कुलवृत्तौ कृषिकार्ये नियोजितवान्। कृषिकार्येण सह सङ्गीताभ्यासार्थं अवकाशम् अपि न कल्पितवान्। स्वेन प्राप्तं वानरशिशुं ताडनेन तर्जनेन यथा नृत्यं क्रीडादिकं च पाठितवान्, तथैव पुत्रम् अपि पालितवान् सः। एवं रूपेण वीरेशः पुत्रस्य चन्द्रकान्तस्य विषये मृगधर्मं पालितवान् अस्ति। वानरः कुत्रापि जन्म प्राप्य क्रीडानृत्यद्वारा सम्पादितं धनं पित्रे अदत्त्वा शिक्षकाय विरेशाय ददाति। अतः मृगधर्मपालकस्य वीरेशस्य पुत्रः चन्द्रकान्तः अपि सम्पादितं धनं पित्रे न ददाति। चन्द्रकान्तस्य गुरुः सङ्गीतविद्वान् चन्द्रकान्तस्य इच्छानुसारं तस्मिन् विद्यमानां गानकलाम् उत्तेजितवान्। अतः सः मानवधर्मपालकः जातः। चन्द्रकान्तः पितृतुल्यं गुरुं गौरवादरेण पश्यन् मानवधर्मं पालितवान्। किन्तु सः पितृगृहात् दूरम् आगतः अस्ति। अतः तेन पित्रे धनं दातव्यं न आसीत्, अपि तु एकः वानरः दातव्यः आसीत्। यतः वीरेशः मृगाणाम् एव पिता भवितुं योग्यः, न तु मनुष्याणाम्। वीरेशः अपरं वानरम् अपि स्वस्य इच्छानुसारं शिक्षणं दत्त्वा धनं सम्पादयितुम् अर्हति। एतेन कारणेन न्यायाधिकारी प्रामाणिकः एव इति ज्ञायते।

सः वस्तुतः प्रशंसार्हः, न्यायपीठस्य मुकुटप्रायः च''इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# सुवर्णविक्रयणम्

सुवर्णपुरनामके नगरे नियमः कृतः आसीत् यत् – अन्यराज्यीयैः सुवर्णनगरम् आगत्य सुवर्णविक्रयणं न करणीयम् इति। यः कोऽपि नियमभङ्गं करोति चेत् तेन कठोरदण्डनम् अनुभोक्तव्यम् आसीत्।

कलिङ्गराज्यस्य युवकः कश्चित् कदाचित् सुवर्णपुरम् आगतवान्। नगरद्वारे एव स्थितान् अधिकारिणः पृष्टवान् – "आगामिसप्ताहे मया पुनः अत्र आगन्तव्यम् अस्ति। तदा सुवर्णस्य विक्रयणं कर्तुं शक्नोमि वा? भवद्भिः अनुमतिः दीयते वा?" इति।

तदा अधिकारिणः – "सर्वथा न शक्यते। सुवर्णविक्रयणं महापराधः अत्र" इति वदन्तः नगरस्य अन्तः गन्तुम् अनुमतिं दत्तवन्तः।

सः युवकः तस्मिन् दिने स्वकार्यं समाप्य स्वनगरं प्रति गतवान्।

अनन्तरसप्ताहे सः युवकः पुनः सुवर्णपुरम् आगतवान्। सः मुख्यद्वारसमीपं यदा आगतः तदा अधिकारिणः तस्य समीपे सुवर्णं स्यात् इति संशयेन तं सूक्ष्मं परिशीलितवन्तः। किन्तु तस्य समीपे सुवर्णं न आसीत्। अधिकारिणः युवकम् उक्तवन्तः – "गतसप्ताहे भवता पृष्टम् आसीत् खलु सुवर्णविक्रयणविषये। तदर्थम् अस्माभिः भवान् परिशीलितः। अन्यथा मा चिन्तयतु" इति।

तदा सः युवकः उक्तवान् – "तथा वा? अस्मिन् सप्ताहे सुवर्णविक्रयणं न शक्यते इति भवद्भिः उक्तं खलु! अतः अहं गतसप्ताहे एव सुवर्णविक्रयणं कृत्वा गतवान्" इति।

युवकस्य एतत् वचनं श्रुत्वा अधिकारिणां मुखं विच्छायं जातम्।







**अस्मद्देशीया पशुपक्षिसम्पत्—**

# काकः इव स्थितोऽपि न काकः

कृष्णवर्णीयाः पक्षिणः अस्मद्देशे विरलाः। कृष्णवर्णीयेषु पक्षिषु काकः तु सुप्रसिद्धः। कज्जलपक्षी (ब्लाक् ड्राङ्गो) अपि कृष्णवर्णीयः एव। किन्तु एषः न काककुलीयः तथापि कृष्णवर्णताकारणतः एषः आंग्लभाषया 'किंग् क्रो' इति निर्दिश्यते। अल्पाकारकस्य एतस्य कर्तरीसदृशं दीर्घं पुच्छद्वयं भवति। एषः ग्रामात् बहिः क्षेत्रेषु, विद्युत्स्तम्भेषु वा उपविशन् तदा तदा भूमिम् आगत्य तृणमध्ये स्थितान् कृमिकीटान् खादन् जीवति।

एषः पक्षी धैर्यशाली। कदाचित् एषः काकेन सह अपि युद्ध्यते। नीडसमीपम् अन्यः कोऽपि पक्षी यथा न आगच्छेत् तथा जागरूकतया तिष्ठति सः। तावदेव न, स्वनीडसमीपे निवसतां पक्षिणां नीडान् अपि रक्षति सः। अतः एषः पक्षी 'रक्षकपक्षी' इत्यपि उच्यते। उत्तरभारते एषः पक्षी 'भीमराजः' इति नाम्ना निर्दिश्यते।

अस्माकं देशे अष्टविधाः कज्जलपक्षिणः सन्ति। दीर्घपुच्छस्य एतस्य ललाटे चूडा भवति। पुच्छस्य अन्ते अपि लघुचूडा भवति। केषाञ्चित् पक्षिणाम् उदरभागः श्वेतवर्णः, पुनः केषाञ्चित् उदरभागः धूसरवर्णेन च भवति। केषाञ्चित् पक्षिणां नेत्रं रक्तवर्णेन विराजते अपि।



# आधुनिकाः भारतीयचित्रकाराः



## शोभासिङ्गवर्यः

भूमौ उपविश्य रेखाभिः किमपि चित्रयन्तं बालं गृहम् आगतः कश्चन बन्धुः पृष्टवान्– "वत्स! भवान् यदा ज्येष्ठः भविष्यति तदा पिता इव सैन्यप्रवेशं करिष्यति खलु?" इति।

तदा बालः निराकरणपूर्वकं शिरः चालितवान्। "तर्हि भवान् किम् अन्यत् करोति?" इति पृष्टवान् सः बन्धुः।

भूमौ रचितं चित्रं प्रदर्शितवान् सः बालः। "एवं चित्रलेखनं क्रियते चेत् उदरपूरणस्य का गतिः?" इति पुनः पृष्टवान् सः बन्धुः।

गृहस्य अन्तः कार्यं कुर्वतीं भगिनीं प्रदर्शितवान् सः बालः।

पञ्जाबराज्यीयस्य सुप्रसिद्धस्य शोभासिङ्गवर्यस्य बाल्ये प्रवृत्ता घटना एषा।

शोभासिङ्गः यदा पञ्चमे वयसि आसीत् तदा एव तदीया माता दिवङ्गता। सैन्ये सर्वेयरपदम् अलङ्कृतवान् पिता पुत्रस्य विषये चिन्तयितुं समयं न प्राप्नोति स्म। अतः शोभासिङ्गस्य पोषणभारं तस्य अग्रजा बीबी लक्ष्मीदेवी, तस्याः पतिः सर्दार् मङ्गलसिङ्गः च निरूढवन्तौ। शोभासिङ्गस्य जन्म १९०१ तमे वर्षे हरगोविन्दपुरे जातम्। बाल्ये एव तेन मातृवियोगः पितृवियोगः च प्राप्तः। पञ्चमकक्ष्यापर्यन्तं तेन विद्याभ्यासः कृतः। ततः सैन्ये अवरचित्रकारत्वेन (ड्राफ्टस्मन्) कार्यं कर्तुं प्रशिक्षणं प्राप्तवान् सः। शोभासिङ्गेन अन्यैः सह इराक्देशः गन्तव्यः अभवत्। तत्र सः सहोद्योगिनां साहाय्येन आरबभाषाम् अधीतवान्। तावदेव सः, तत्र सः सुप्रसिद्धचित्रकाराणां चित्रैः रचितानि पुस्तकानि अपि परिशीलितवान्। तेन तस्मिन् मात्रा कलाभिरुचिः जागरिता अभवत्।

१९२३ तमे वर्षे सः भारतं प्रत्यागतः। तदा तस्य विवाहः अपि जातः। चित्रकारत्वेन जीवनं यापनीयम् इति निश्चित्य सः सैन्योद्योगं परित्यक्तवान्। लाहोरनगरे एकां चित्रशालाम् आरब्धवान् च। जीवने बहुधा कष्टानि अनुभवन्



अपि सः सिक्खगुरूणां चित्राणां लेखने उद्युक्तः अभवत्। ताः कथाः तस्य चित्ररचनायाः प्रेरिकाः आसन्, यासु च धैर्यं, साहसप्रवृत्तिः, प्रीतिः इत्यादयः स्फुटं दृश्यन्ते स्म।

केषाञ्चित् वर्षाणाम् अनन्तरं सः स्वचित्रशालां लाहोरतः देहलीम् आनीतवान्। १९४२ तमे वर्षे सः 'प्रीतनगर' नामकं ग्रामं गतवान्, यश्च ग्रामः अमृतसर-लाहोरनगरयोः प्रकाश्यमानायाः 'प्रीतलहरी'-नामिकायाः पत्रिकायाः सम्पादकेन गुरुबक्षसिंहवर्येण आरब्धः आसीत्। किन्तु तस्मिन् आदर्शग्रामे दीर्घकालं स्थातुम् अशक्नुवन् शोभासिंहः पुनः लाहोरनगरं गतवान्।





१९४७ तमे वर्षे भारतविभागः जातः। तदा लाहोरनगरे स्थितां चित्रशालाम्, अमूल्यानि चित्राणि, सर्वस्वं च परित्यज्य तेन भारतं प्रति आगतम्। ततः सः हिमाचलप्रदेशस्थे कांग्रालानप्रदेशे स्थिरवासम् उपकल्प्य नवोत्साहेन चित्रलेखने उद्युक्तः अभवत्। तदा एव तेन उत्तमचित्रकारत्वेन कीर्तिः प्राप्ता।

शोभासिंहवर्यः १९८६ तमे वर्षे अगस्तमासे २१ तमे दिनाङ्के दिवं गतः। चित्रकलायां क्रमशिक्षणम् अप्राप्य अपि सः स्वप्रतिभया एव चित्रं लिखन् श्रेष्ठचित्रकारत्वेन ख्यातिं प्राप्तवान्। अतः एव सः 'सहजचित्रकारः' इति निर्दिश्यते। तेन लिखितानि गुरुनानकचित्राणि, अन्यानि सिक्खगुरूणां चित्राणि, रामकृष्णादीनां देवानां चित्राणि च चित्रकलाभिमानिनाम् आदरस्य प्रीतेः च पात्राणि सन्ति।

# भवन्तः जानन्ति वा?

१. जीवत्सु पक्षिषु महत्तमः कः?
२. भारतीयं संविधानं कदा व्यवहारान्वितं जातम्?
३. अन्ताराष्ट्रियाः पञ्च भाषाः सन्ति। ताः काः?
४. राष्ट्रपतिः, उपराष्ट्रपतिः, प्रधानमन्त्री, राज्यसभाध्यक्षः, लोकसभापतिः इत्येतेषु कार्यनिर्वाहकः कः?
५. समुद्रेषु महत्तमः समुद्रः कः? लघुतमः समुद्रः च कः?
६. 'वन्दे मातरम्' 'जनगणमन' इत्यनयोः गीतयोः अन्तरं किम्?
७. साहित्यक्षेत्रे ऐदम्प्राथम्येन नोबेल्प्रशस्तिं कः प्राप्तवान्?
८. अस्मद्देशे कया भाषया अत्यधिकपत्रिकाः प्रकाशिताः भवन्ति?
९. कस्मिन् देशे अर्धरात्रे सूर्यदर्शनं सम्भवति?
१०. अस्मद्देशीयेषु सङ्गीतवाद्येषु प्राचीनतमं किम्?
११. ओलम्पिक्क्रीडाः कतिषु वर्षेषु एकवारं प्रचलन्ति?
१२. अस्माकं देशे दासवंशं कः स्थापितवान्? सः कस्य राज्ञः दासः आसीत्?
१३. प्रपञ्चस्तरे अतिविशालः जलपातः कः?
१४. अस्माकं देशे ऐदम्प्राथम्येन कः चलनचित्रं निर्मितवान्? तेन निर्मितस्य चित्रस्य नाम किम्?
१५. 'थायुल्याण्ड्' देशस्य प्राचीनं नाम किम्?
१६. भगवान् बुद्धः कदा निर्वाणं प्राप्तवान्?
१७. प्रपञ्चस्तरे अतिविशालं विमानस्थानकं किम्?

## उत्तराणि

१. अग्निकुक्कुटः।
२. १९५०तमे वर्षे जनवरीमासे २६ दिनाङ्के।
३. इंग्लीषु, फ्रेञ्च्, स्पानिष्, रष्यन्, इटालियन् च।
४. प्रधानमन्त्री।
५. पेसिफिक्महासागरः। अट्लाण्टिक्सागरः।
६. प्रथमं राष्ट्रियप्रार्थनागीतम्। द्वितीयं राष्ट्रगीतम्।
७. आर्.एफ्.ए.सल्ली-प्रधोम्।
८. हिन्दीभाषया। त्रिसहस्राधिकाः पत्रिकाः।
९. नार्वेदेशे।
१०. वीणा।
११. चतुर्षु वर्षेषु एकवारम्।
१२. कुतुबुद्दीन्। घोरिमोहम्मदवर्यस्य।
१३. लासोसुनगरस्थः सोनेजलपातः। वैशाल्यं च १०,८०० मीटर्।
१४. दादासाहेबफाल्के। १९१३तमे वर्षे। चित्रनाम– राजा हरिश्चन्द्रः इति।
१५. स्याम् इति।
१६. क्रि.पू. ४८८ तमे वर्षे।
१७. सौदी-अरेबियादेशस्य रियाध्प्रदेशस्थं किंग् खालीद् अन्ताराष्ट्रियं विमानस्थानकम्।



# महात्मा

शिवनामकः कश्चित् आसीत् पूर्वम्। सः अतीव दरिद्रः। सः चिन्तितवान् यत् – किमपि वाणिज्यं कृत्वा धनं सम्पादयामि इति। तदर्थं सः बहूनां समीपं गत्वा धनसाहाय्यं प्रार्थितवान्। किन्तु केऽपि तस्य साहाय्यं न कृतवन्तः। केशवः शिवस्य दूरबन्धुः। सः अत्यन्तं कृपणः। शिवः कुतश्चित् अपि धनसाहाय्यम् अप्राप्य अन्ते केशवसमीपं गत्वा पृष्टवान्। तदा केशवः उक्तवान् – "भवान् तु अतीव दरिद्रः। ऋणं प्रतिदातुं न शक्नोति भवान्। एतत् सर्वं ज्ञात्वा अपि कथम् अहं भवते धनं दातुं शक्नुयाम्? श्रीपुरनामके ग्रामे गुणशेखरः इति कश्चित् महात्मा अस्ति। सः अतीव दयालुः। अतः गुणशेखरतः धनं स्वीकरोतु। तेन धनेन कार्यं किमपि साधयितुं शक्नुयात् भवान्" इति।

शिवः श्रीपुरं गत्वा गुणशेखरं दृष्टवान्। स्वविषयं निवेदितवान् च। गुणशेखरः शिवस्य दीनां परिस्थितिं ज्ञात्वा – "अहं भवते सहस्रं रूप्यकाणि दास्यामि। तेन धनेन भवान् वाणिज्यं करोतु। यदि भवान् वाणिज्ये लाभं प्राप्नोति, तर्हि एकस्य वर्षस्य अनन्तरं मह्यं भवता द्विसहस्रं रूप्यकाणि दातव्यानि। एकस्मिन् वर्षे द्विसहस्रं रूप्यकाणि दातुं न शक्यते चेत् अनन्तरवर्षे चतुस्सहस्रं रूप्यकाणि दातव्यानि भवता। एवमेव प्रतिवर्षं वृद्धिः दातव्या भवति। एतत् भवता अनुमतं वा?" इति पृष्टवान्।

शिवः गुणशेखरस्य वचने विश्वस्य तेन उक्तान् नियमान् अङ्गीकृतवान्। गुणशेखरः शिवस्य हस्तात् ऋणपत्रं स्वीकृत्य सहस्रं रूप्यकाणि दत्त्वा शिवं प्रेषितवान्। एकवर्षाभ्यन्तरे एव शिवः वाणिज्ये पञ्चासहस्रस्य रूप्यकाणां लाभं

"भगिनी"



प्राप्तवान्। सम्पादिते धने द्विसहस्रं रूप्यकाणि गुणशेखराय दातव्यानि इति शिवः चिन्तितवान्। तस्मिन् समये कश्चित् वणिक् आगत्य शिवम् उक्तवान्– "आवां मिलित्वा वाणिज्यं कुर्वः। तस्मिन् वाणिज्ये मूलधनरूपेण भवता पञ्चसहस्रं रूप्यकाणि दातव्यानि। एकस्य वर्षस्य अनन्तरं भवान् पञ्चाशत्सहस्ररूप्यकाणां लाभं प्राप्तुं शक्नोति" इति।

तदा शिवः 'गुणशेखराय द्विसहस्रं रूप्यकाणि ददामि चेत् इदानीं प्राप्तः एषः सदवकाशः नष्टः भवति। एकवर्षस्य अनन्तरं पञ्चाशत्सहस्रं रूप्यकाणि सम्पाद्य तस्मिन् धने चतुस्सहस्रं रूप्यकाणि गुणशेखराय दास्यामि' इति चिन्तयन् तेन वणिजा सह नूतनवाणिज्यम् अङ्गीकृतवान्। तौ मिलित्वा वाणिज्यम् आरब्धवन्तौ। तस्मिन् वाणिज्ये महान्तं लाभं प्राप्तवान् शिवः।

पञ्च वर्षाणि अतीतानि। शिवः लक्षाधिकं रूप्यकाणि सम्पादितवान्। तस्मिन् समये गुणशेखराय दातव्यं ऋणम् अपि अधिकप्रमाणेन आसीत्। गुणशेखराय शिवेन त्रिंशत्सहस्रं रूप्यकाणि दातव्यानि आसन्। तावत् अपि धनं युगपत् गुणशेखराय दातुं शिवः न इच्छति।

'गुणशेखरः सहस्रं रूप्यकाणि दत्त्वा पञ्चवर्षाणाम् अनन्तरं त्रिंशत्सहस्रं रूप्यकाणि प्राप्तुम् इच्छति। एतादृशः सः न महात्मा, अपि तु लुण्ठाकः' इति चिन्तयन् शिवः ऋणप्रत्यर्पणविषयं विस्मृत्य मौनं स्थितवान्। कानिचन दिनानि अतीतानि। गुणशेखरस्य पुत्र्याः विवाहः निश्चितः। गुणशेखरः पुत्र्याः निमित्तम् आभरणानि क्रेतुं शिवस्य आपणम् एव आगतवान्। तस्मिन् समये आपणे शिवस्य कर्मकरः आसीत्। चतुस्सहस्ररूप्यकमूल्यकस्य किञ्चित् आभरणं क्रीतवान् गुणशेखरः। सः आभरणस्य मूल्यं यदा दातुम् उद्युक्तः तदा ज्ञातं यत्– त्रिसहस्रं रूप्यकाणि एव सन्ति इति। एतत् सर्वं दूरतः पश्यन् आसीत् शिवः। गुणशेखरस्य मुखदर्शनेन एव वस्तुस्थितिं जानन् शिवः कर्मकरम् आहूय 'गुणशेखरेण

सह सविनयं व्यवहरतु। सः यत् आभरणम् इच्छति तत् स्वीकरोतु। धनविषये चिन्ता मास्तु' इति उक्त्वा बहिः गतवान्।

गुणशेखरः आभरणं क्रीत्वा सङ्कोचेन उक्तवान्– "मया बहूनि वस्तूनि क्रीतानि। अतः आनीतं धनं सर्वं समाप्तम्। मम समीपे इदानीं त्रिसहस्रं रूप्यकाणि एव सन्ति। पुनः सहस्रं रूप्यकाणि पञ्चदिनाभ्यन्तरे आनीय दास्यामि" इति।

गुणशेखरस्य वचनं श्रुत्वा कर्मकरः– "तद्विषये चिन्ता मास्तु भोः। मम स्वामिना एव भवते बहुधनं दातव्यम् अस्ति किल!" इति उक्तवान्।

तदा गुणशेखरः उक्तवान्– "सः विषयः अन्यः। भवतः स्वामिना दातव्यस्य धनस्य वृद्धिं स्वीकरोमि अहम्। सः यथा यथा विलम्बेन धनं प्रत्यर्पयति तथा तथा लाभः अधिकः मम। किन्तु एतेषां सहस्ररूप्यकाणां वृद्धिम् अहं न दास्यामि" इति।

कर्मकरः गुणशेखरस्य वचनम् अङ्गीकृत्य त्रिसहस्रं रूप्यकाणि स्वीकृत्य आभरणं दत्त्वा प्रेषितवान्। शिवस्य आगमनानन्तरं प्रवृत्तं सर्वं निवेदितवान् कर्मकरः। कर्मकरात् विषयं ज्ञात्वा शिवः चिन्तितवान्– 'गुणशेखरः मत्तः मूलधनं स्वीकर्तुम् एव आगतवान्। सहस्रं रूप्यकाणि एव कथं न्यूनानि भवन्ति? एतत् सर्वं धनस्वीकरणतन्त्रम्' इति।

एतस्य प्रकरणस्य अनन्तरं दिनद्वयाभ्यन्तरे एव गुणशेखरः अकस्मात्





केनचित् रोगेण पीडितः दिवङ्गतः। गुणशेखरस्य मरणवार्तां श्रुत्वा शिवः अन्तरङ्गे आनन्दम् अनुभूतवान्। 'न्यायरूपेण मया सहस्रं रूप्यकाणि दातव्यानि आसन्। तत् तु दत्तम्' इति किञ्चित् तृप्तिम् अपि प्राप्तवान् सः।

गुणशेखरस्य ज्येष्ठपुत्रः पितुः शवसंस्कारादिकं समाप्य वैकुण्ठ-समाराधननिमित्तं ग्रामस्य सर्वान् प्रमुखान् आहूतवान्। वैकुण्ठसमाराधनं प्रति आगताः तद्ग्रामीणाः सर्वे मृतस्य गुणशेखरस्य प्रशंसां कुर्वन्ति स्म– 'गुणशेखरः निःस्वार्थी आसीत्। दयालुः गुणवान् च आसीत्। अतः एव सः सुखमरणं प्राप्तवान्' इति। एतादृशं सम्भाषणं श्रुत्वा शिवः चिन्तयति स्म– 'धनाशया ऋणं दत्त्वा वृद्धिरूपेण प्रभूतं धनं सम्पादयति स्म गुणशेखरः। तादृशम् अपि जनाः प्रशंसन्ते' इति।

कार्यक्रमस्य अन्ते गुणशेखरस्य ज्येष्ठपुत्रः सर्वान् उद्दिश्य उक्तवान्– "मम पिता बहुभ्यः धनसाहाय्यं कृतवान् अस्ति। केभ्यश्चित् ऋणं दत्तवान् अस्ति। एतादृशव्यवहारं एकस्मिन् पुस्तके लिखित्वा स्थापितवान् आसीत् सः। तेन पुस्तकेन सह मम पित्रा लिखितं मरणशासनम् अपि आसीत्। तत् न दृश्यते। तत् कुत्र अस्ति इति सद्यः एव अन्वेषणं करोमि" इति।

तदा तद्ग्रामस्य ग्रामाधिकारी– "गुणशेखरः गणनापुस्तकं, मरणशासनपत्रं च अयसः पेटिकायाः रहस्यकपाटिकायां स्थापयति स्म इति अहं जानामि। अहं तत् दर्शयामि। किन्तु अद्य उत्तमं दिनं न। अतः श्वः तां कपाटिकाम् उद्घाटयामः" इति उक्त्वा ततः गतवान्।

गुणशेखरेण लिखितं गणनापुस्तकम् अस्ति इति ज्ञात्वा शिवः भीतः। गुणशेखरस्य पुत्रः यदि गणनापुस्तकं पश्यति तर्हि मया गुणशेखरस्य पुत्राय बहुधनं दातव्यं भवति इति चिन्तितवान् सः।

शिवः इव अन्यैः अपि कैश्चित् वणिग्भिः गुणशेखराय लक्षाधिकरूप्यकाणि दातव्यानि आसन्। तादृशाः सर्वे एकत्र मिलित्वा एकम्

उपायं चिन्तितवन्तः। तेषां चिन्तनानुसारं तैः एव प्रेरितः कश्चित् कर्मकरः तस्मिन् दिने रात्रौ गुणशेखरस्य गृहं गत्वा गुणशेखरस्य पुत्रे भयम् उत्पादितवान्। अयसः पेटिकायाः रहस्यकपाटिकातः धनगणनापुस्तकं बलात् स्वीकृत्य ततः शिवसमीपं गत्वा तस्मै दत्तवान्। शिवेन दत्तं धनं स्वीकृत्य सन्तोषेण ततः निर्गतवान् कर्मकरः।

तत् गणनापुस्तकम् अग्नौ स्थापनीयम् इति शिवः, तस्य स्नेहिताः च चिन्तितवन्तः। तथापि अस्माकं ऋणविषये किं लिखित्वा स्थापितवान् स्यात् गुणशेखरः इति ज्ञातव्यम् इति चिन्तयन्तः ते कुतूहलेन तत् पुस्तकम् उद्घाटितवन्तः।

पुस्तके एवं लिखितम् आसीत्– "अहं सामान्यजनेभ्यः ऋणम् इत्युक्त्वा धनं ददामि। दानम् इति वदामि चेत् धनस्य आवश्यकता भवतु वा न वा, सर्वे मां धनं पृच्छेयुः इति भीतिः अस्ति मम। मत्तः ये धनं स्वीकृतवन्तः ते धनं मह्यं प्रत्यर्पयन्ति चेत् तत् धनं पुण्यकार्येषु नियोजयामि। धनं न प्रत्यर्पयन्ति चेत् अहं मौनं तिष्ठामि। तैः लिखितं ऋणपत्रम् तु तेषां निर्गमनानुक्षणम् एव छिन्नं कृत्वा क्षिपामि। मम ज्येष्ठपुत्रः अपि एवमेव जीवनं यापयति चेत् मम आत्मनः शान्तिः भविष्यति" इति।

एतत् पठित्वा वणिजः खिन्नाः। ते स्वदोषं ज्ञातवन्तः। तस्मिन् गणनापुस्तके प्रत्यर्पणीयस्य धनस्य विवरणं लिखितम् आसीत्। अन्ते लिखितम् आसीत् यत्– मया शिवाय सहस्रं रूप्यकाणि दातव्यानि इति।

सर्वे अपि गुणशेखरं महानुभावं दयालुं च किमर्थं मन्यन्ते इति शिवः तस्य स्नेहिताः च ज्ञातवन्तः। ते तत् पुस्तकं रहस्यरूपेण गुणशेखरस्य गृहं प्रापितवन्तः।

अनन्तरदिने ते सर्वे अपि दातव्यं धनं गुणशेखरस्य पुत्राय दत्तवन्तः।

अनन्तरकाले शिवः गुणशेखरस्य ज्येष्ठपुत्रेण सह स्नेहेन व्यवहरन् गुणशेखरः इव जनानां धनसाहाय्यं कर्तुम् आरब्धवान्।





# कुब्जस्य विवाहः

सङ्गमपुरनामके ग्रामे पूर्वं वामनः नाम वामनः आसीत्। वामनत्वकारणतः एव जनानाम् उपहासपात्रं भवति स्म सः। वामनः वनगजानां ग्रहणे गजशिक्षणे च नितरां समर्थः आसीत्। ये महाराजाय गजानां विक्रयणं कुर्वन्ति तादृशेभ्यः वणिग्भ्यः शिक्षितान् गजान् यच्छन् एषः वामनः जीवनं यापयति स्म।

कदाचित् मृगयार्थम् अरण्यं गतः राजा वामनस्य गजशिक्षणकौशलं प्रत्यक्षं दृष्टवान्। नितरां सन्तुष्टः सः वामनम् उक्तवान्– "गजविद्यायां नितरां समर्थं भवन्तं गजशालायाः अधिकारिणां पर्यवेक्षकं कुर्वन् अस्मि" इति।

एवं वामनः गजशालायाः पर्यवेक्षकः जातः। बहवः अधिकारिणः तस्य अधीनाः आसन्। प्रतिमासं वेतनरूपेण प्रभूतं धनम् अपि प्राप्नोति स्म सः। एवं धनम् अधिकारः च अस्ति चेदपि वामनस्य मुखे सदा चिन्तारेखाः दृश्यन्ते स्म।

एतत् दृष्ट्वा कदाचित् राजा वामनम् उक्तवान्– "उच्चोद्योगे नियुक्तः अस्ति भवान्। गजविद्यायां भवतः नैपुण्यं दृष्ट्वा सर्वे आश्चर्यम् अनुभवन्ति। एवं स्थिते अपि भवान् सन्तोषेण तृप्त्या च किमर्थं न तिष्ठति? अनुकूलायाः सहचर्याः अभावः अत्र कारणं स्यात्। अतः अचिरात् एव काञ्चित् परिणयतु" इति।

एतत् श्रुत्वा विषादेन हसन् वामनः महाराजम् उक्तवान्– "महाराज! भवतः औदार्येण अहम् उच्चोद्योगं प्राप्तवान् इति तु सत्यम् एव। अतः अहं कृतज्ञोऽस्मि। किन्तु भवान् अपि माम् उपहसति खलु? सर्वं दौर्भाग्यं मम" इति।

वामनस्य एतत् वचनं श्रुत्वा नितरां खिन्नः राजा– "मया उपहासार्थम् एवं न उक्तं मित्र! सर्वे अपि पत्नीं पुत्रादीन् च इच्छन्ति यत् तत् जीवने सहजम्। अतः एव विवाहप्रस्तावः कृतः मया। विवाहात् एव जीवने तृप्तिः। योग्यां कन्याम् अन्विष्य भवतः विवाहं निर्वर्तयिष्यामि" इति उक्तवान्।

वामनस्य विवाहः कथं निर्वतनीयः?' इति महाराजस्य चिन्ता जाता। 'त्यागशीला काचित् यदि वामनं परिणयेत् तर्हि एव सम्यक् भवेत्' इति आलोच्य राजा समग्रे देशे सडिण्डिमघोषं वार्तां प्रसारितवान् यत् या कन्या वामनं परिणेतुम् अङ्गीकरोति तस्याः पित्रे विशाला भूमिः, प्रभूतं धनं, नूतनं भवनं च दीयते इति।



एतां वार्तां श्रुत्वा बहवः कन्यापितरः चिन्तितवन्तः यत् मम पुत्री यदि वामनं परिणयेत् तर्हि महत् सौभाग्यं प्राप्यते इति। किन्तु तेषां पुत्र्यः वामनं परिणेतुं सिद्धाः न जाताः इत्यतः तेषाम् आशायाः भङ्गः जातः। पुनः केचन बन्धूनां निन्दनं श्रुत्वा मौनम् आश्रितवन्तः।

अन्ते तिस्रः कन्याः वामनं परिणेतुम् अग्रे आगतवत्यः। तासु उभे सामान्यरूपवत्यौ। तृतीया वामनः इव वामना।

राजा ताः पृथक् पृथक् आहूय उक्तवान्– "भीतिं, सङ्कोचं च विना एतद्विषये भवतीनाम् अभिप्रायं प्रकटयन्तु" इति।

तदा प्रथमा कन्या उक्तवती– "महाराज! विमाता मां प्रतिदिनं बहुधा पीडयति। मम पिता तस्याः दासः जातः अस्ति। सा मां कस्मैचित् वृद्धाय वधूरूपेण दातुं योजनां कृतवती अस्ति। एतत्सन्दर्भे मया भवतः प्रकटनं श्रुतम्। भवतः आज्ञा यथा तथा कर्तुं सिद्धा अहम्" इति।

"यदि सुन्दरः अन्यः कश्चन वरः प्राप्येत तर्हि भवती एतस्य वामनस्य परिणयविचारं परित्यजेत् वा?" इति पृष्टवान् राजा।

"राजाज्ञा यथा भवति तथा करोमि अहम्" इति उक्तवती सा तरुणी।

द्वितीया तरुणी निर्धनकुले जाता। "मम पितुः विवाहयोग्ये इतोऽपि उभे पुत्र्यौ स्तः।

यदि अहं वामनं परिणयेयं तर्हि मम कुटुम्बस्य किञ्चित् वा आनुकूल्यं स्यात्। वामनं परिणयन्त्याः मम पित्रे यावत् प्रकटितं ततोऽपि अधिकं धनं भवान् ददाति चेदपि वरम् एव" इति उक्तवती सा।

अन्ते राजा वामनाम् आहूय उक्तवान्— "वत्से! वामनस्य विवाहार्थं मया यथा प्रयत्नः क्रियते तथैव भवत्याः विवाहार्थम् अपि प्रयत्नः कर्तुं शक्यते। राजा अहं यत्किमपि साधयितुं सिद्धः। भवत्याः निमित्तं स्वयंवरम् आयोज्य सुन्दरान् युवकान् निमन्त्रयिष्यामि। तेषु कञ्चित् परिणीय सुखेन जीवतु भवती। यत्र सौन्दर्यम् अस्ति, तत्र बुद्धिमत्ता-गुणादीनां मौल्यं किञ्चिदपि न भवति इति भवती जानाति एव खलु? अतः किम् एतस्य वामनस्य परिणयेन?" इति।

तदा सा वामना राजानं नमस्कृत्य— "प्रभो, राजाज्ञया मन्मथसदृशं वरं कञ्चित् चेतुं शक्नुयात् भवान्। किन्तु मनः योजयितुं तु न शक्यते खलु? अहं वामनस्य स्तरस्य अनुगुणा न स्यां नाम, किन्तु तस्य मनः अवगत्य तदनुगुणं व्यवहर्तुं तु समर्था अस्मि" इति उक्तवती।

वामनायाः एतत् वचनं श्रुत्वा सन्तुष्टः राजा अनन्तरदिने वामनं स्वसमीपम् आहूय— "भवतः आर्थिकानुकूल्यं तु अस्ति। एतेन सह यदि सुन्दरी तरुणी भवतः पत्नी स्यात् तर्हि भवतः वामनत्वं जनैः गौणं भाव्येत। किन्तु मया तु भवतः मनः अवगत्य व्यवहर्तुं समर्था काचित् वामना भवदर्थं चिता। यदि एषा भवतः इष्टाय न स्यात् तर्हि सुन्दरीं तरुणीम् एव भवदर्थम् आनयेयम्" इति उक्तवान्।

वामनः तु मनः अवगन्तुं समर्थां वामनाम् एव इष्टवान्। ततः वामना-वामनयोः विवाहः निर्वर्तितः राज्ञा।

अनन्तरं स्वगृहस्य कष्टस्य कारणतः ये तरुण्यौ वामनं परिणेतुम् अग्रे आगतवत्यौ तयोः विवाहम् अपि योग्यं वरम् अन्विष्य निर्वर्तितवान् राजा।






रामेण सह आगताः सर्वे अञ्जनादेव्या कृतेन विविधेन सत्कारेण नितरां सन्तुष्टाः। तद्विषये एव वार्तालापं कुर्वन्तः ते अयोध्यां प्रत्यागतवन्तः।

मार्गे सीता यशोधराम् उक्तवती– "मया पूर्वम् एव उक्तम् आसीत् खलु– भवत्याः पत्युः कोऽपि अपायः न भविष्यति इति? हनूमन्तं शरणं गतः ययातिः इष्टार्थं साधितवान्" इति।

तदा यशोधरा सीतां कृतज्ञतापूर्वकं पश्यन्ती– "अम्ब! भवत्याः श्रीरामस्य च अनुग्रहस्य कारणतः एव एतत् सिद्धम्। हनूमतः हृदये प्रभुणा श्रीरामेण सह स्थिता भवती दृष्टा अस्माभिः। अपूर्वं दृश्यं तत्। तस्य दर्शनात् वयं कृतार्थाः जाताः" इति उक्तवती।

"आञ्जनेयस्य हृदये श्रीरामेण सह स्थिता सीतादेवी अस्माभिः अपि दृष्टा" इति वदन्तौ चन्द्राङ्गदः चन्द्रमुखी च महता सन्तोषेण उत्साहेन च करताडनं कृतवन्तौ। तूष्णीं तिष्ठताम् इति यशोधरा तौ नेत्रसङ्केतेन सूचितवती।

बालयोः व्यवहारं सकुतूहलं प्रीत्या पश्यन्तीं सीताम् उक्तवती सा– "आर्ये, सीतादेवि, भवत्याः मुखे मातृच्छाया स्फुटं दृश्यते। अचिरात् एव भवती पुत्रवती भविष्यति इति भासते" इति।

सीता लज्जाम् अनुभवन्ती मन्दहासपूर्वकं यशोधरां दृष्ट्वा– "भवती वयसा मम अपेक्षया कनिष्ठा चेदपि उभौ रत्नतुल्यौ पुत्रौ



प्राप्य ज्येष्ठत्वं सम्पादितवती। भवत्याः वचनम् आशीर्वादं भावयामि'' इति उक्तवती।

शिबिकायाम् उपविष्टे ते उभे अपि एवं वार्तालापं कुर्वत्यौ अयोध्यां प्राप्तवत्यौ। ययातिः सपरिवारं तिष्ठन् कानिचन दिनानि रामस्य आतिथ्यं प्राप्तवान्। सीता यशोधरया सह वार्तालापं कुर्वती, तस्याः पुत्राभ्यां सह जल्पन-क्रीडा-हासादिभिः सन्तोषेण दिनानि यापयति स्म। तौ तु बालौ सीताम्– ''अम्ब! अम्ब!'' इति सम्बोधयन्तौ तां परितः एव विहरतः स्म। अतः सीता आनन्दसागरे निमग्ना इव।

ततः केषाञ्चित् दिनानाम् अनन्तरं ययातिः रामस्य अनुज्ञां प्राप्य पत्न्या पुत्राभ्यां च सह स्वराज्यं प्रतिगतवान्।

कस्याञ्चित् पूर्णिमारात्रौ सीता रामेण सह अन्तःपुरस्य उद्याने विहरन्ती आसीत्। यदा चन्द्रोदयः जातः तदा रामः– ''सीते! तत्र पश्यतु तावत्'' इति सीताम् उद्दिश्य उक्तवान्।

तदा सीता– ''पूर्वानामिकायां कौसल्यायां रामचन्द्रः उदयं प्राप्नुवन् अस्ति'' इति उक्तवती।

''न तथा। सीतादेव्याम् एतादृशः एव अपूर्वः कश्चन चन्द्रोदयः भविष्यति इति पूर्वा दिक् सन्दिशन्ती अस्ति'' इति उक्तवान् रामः।

''स च चन्द्रः रामचन्द्रसदृशः एव भविष्यति इत्यपि वदन्ती अस्ति सा'' इति उक्तवती सीता।

''तावदेव न। सीतादेव्याः तादृश्यम् अपि तस्य जनिष्यमाणस्य चन्द्रस्य भविष्यति इत्यपि वदन्ती अस्ति सा'' इति मन्दहासपूर्वकम् उक्तवान् रामः।

उभौ अपि सन्तोषेण हसितवन्तौ। तौ यत्र स्थितवन्तौ आस्तां ततः अनतिदूरे लघुसरोवरे कुमुदद्वयं विकसत् आसीत्। सरोवरस्य सौन्दर्यस्य आस्वादनं कुर्वती सीता किञ्चित्कालं मौनं स्थितवती। ततः उत्थाय रामेण सह अन्तःपुरं गतवती।

रात्रेः प्रथमः यामः यदा अतीतः तदा

उत्थाय आगता सीता चन्द्रशालायाम् उपविश्य उद्यानसौन्दर्यं निर्निमेषं दृष्टवती। सरोवरजले प्रतिफलिताः चन्द्रकिरणाः उद्यानशोभां वर्धितवन्तः आसन्। चन्द्रकिरणैः स्नातं कुमुदद्वयं तु नक्षत्रम् इव विराजमानं नेत्रानन्दकरम् आसीत्।

* * * *



गन्धमादनपर्वते वसन् हनूमान् जपं तपः च कुर्वन् दिनानि यापयति स्म। एतेन क्रमेण कति वर्षाणि यापितानि इत्येव न ज्ञातं हनूमता। कदाचित् रामस्य परमाप्तः वयोवृद्धः भद्रः अयोध्यातः आगत्य हनूमन्तम् उक्तवान्– "भवता अविलम्बेन आगन्तव्यम् इति प्रभुः श्रीरामः सूचितवान् अस्ति" इति।

भद्रस्य मुखं म्लानम् आसीत्। महती चिन्ता मुखे स्फुटं दृश्यते स्म। "भद्र! किं प्रवृत्तम्? अयोध्यायां कः विशेषः? काऽपि अहितकरी घटना प्रवृत्ता वा तत्र?" इति पृष्टवान् हनूमान्।

तदा भद्रः सुदीर्घं निश्श्वस्य– "अयोध्यायां बहु प्रवृत्तम् ....." इति उक्तवान्।

"भद्र! यत् प्रवृत्तं तत् मङ्गलकरम् उत अमङ्गलकरम्? सर्वं वदतु तावत्" इति उक्तवान् हनूमान्।

"अस्तु, सङ्ग्रहेण प्रवृत्तं निवेदयिष्यामि" इति उक्त्वा भद्रः अयोध्यायाः घटनायाः विवरणम् उक्तवान्–

कदाचित् कश्चन ब्राह्मणगणः ऋषिभिः सह रामसमीपम् आगच्छत्। अवदत् च– "शम्बूकः नाम कश्चन तपः कर्तुम् अनर्हः वेदाध्ययनं कृत्वा तपसि निरतः अस्ति। अतः धर्महानिः जाता। तस्य परिणामतः अस्माकं ग्रामस्य कश्चन बालकः अकालमरणं प्राप्तवान्। अतः भवता अविलम्बेन शम्बूकस्य वधः करणीयः" इति।

प्रजाहितं चरमं लक्ष्यं मन्यमानः रामः स्वदेशे बालकस्य अकालमरणम् असहमानः अरण्यं गतवान्। अधोमुखं स्थित्वा कठोरे तपसि लीनस्य शम्बूकस्य वधं कृतवान् च। एतत् दृष्ट्वा तदीया पत्नी कपिला रामम् उद्दिश्य– "राजन्! भवता आचरात् एव



श्रेष्ठः, येन मां निराकुर्यात्?" इति कोपेन पतिं पृष्टवती।

तदा सः पानमत्तः रजकः क्रोधेन ज्वलन्– "राजा अहं यथा इच्छा तथा व्यवहरामि इति चिन्तयित्वा रामः परपुरुषवशे स्थितां सीतां पुनः प्रतिगृहीतवान्। किन्तु अहं रामः इव बुद्धिविहीनः न खलु?" इति सर्वेषां पुरतः उक्तवान्।

एतत् रामः अपि श्रुतवान्। नितरां खिन्नः सः लक्ष्मणम् आहूय आज्ञापितवान् यत् सीताम् अरण्ये परित्यज्य आगच्छतु इति। गर्भिणी सीता पूर्वदिने रामम् उक्तवती आसीत् यत् ऋष्याश्रमाः मुनिपत्न्यः च द्रष्टव्याः इति मम इच्छा इति। अग्रजस्य श्रीरामस्य आज्ञां पालयन् लक्ष्मणः ऋष्याश्रमप्रदर्शनव्याजेन सीतां रथे उपवेश्य अरण्यं नीत्वा तत्र रामस्य आज्ञां श्रावयित्वा तां तत्र परित्यज्य प्रत्यागतवान्।

सीतावियोगतप्ताय रामाय आहारादिकम् अपि न अरोचत। दिने दिने सः कृशः जातः। एतत् द्रष्टुं न शक्तवान् अहम्। रामं बाल्यात् अपि अहं पश्यन् अस्मि खलु? 'चन्द्रः आवश्यकः' इति यदा बाल्ये रामः रोदनं कृतवान् आसीत् तदा अहं दर्पणम् आनीय चन्द्रबिम्बं प्रदर्शितवान् आसम्। रामः यदा दर्पणे दृष्टवान् तदा तदीयं मुखम् अपि तत्र दृष्टम्। तदा रामः एतत् दृष्ट्वा 'रामचन्द्रः' इति उक्तवान् आसीत्। यदा अहं स्वमुखं

विपत् सम्मुखीक्रियत। इदानीं यत् दारुणं कृत्यं कृतं तस्य फलं तत्" इति उक्त्वा प्राणत्यागं कृतवती।

एतदनन्तरं कदाचित् रामः मया सह रात्रौ नगरप्रदक्षिणं कुर्वन् आसीत्। तदा नगरसीमायां रजकस्य कस्यचित् गृहे विवादः प्रचलन् आसीत्।

कुत्रापि गत्वा कानिचन दिनानि स्थित्वा प्रत्यागतां पत्नीं रजकः सम्यक् ताडितवान्। तस्यै गृहं प्रवेष्टुम् अनुमतिं न दत्तवान् च। तदा व्रणितशरीरा सा महिला उच्चैः रोदनं कुर्वती– "चतुर्दश वर्षाणि लङ्कायां स्थितया सीतया सह सः रामः सन्तोषेण जीवति। एवं स्थिते किं भवान् रामापेक्षया

तस्य मुखस्य समीपे नीत्वा हसन्– 'इदनीम् ....?' इति पृष्टवान्, तदा रामः 'रामभद्रः' इति उक्तवान् आसीत्। एतादृशः मम प्रियः रामः रजकस्य कारणतः कष्टं प्राप्तवान् इति स्मरतः मम तस्मिन् रजके महान् क्रोधः आगतः। 'सः रजकः मारणीयः' इति आलोच्य अहं रजकवसतिं गत्वा 'सः रजकः कुत्र?' इति विचारितवान्।



"रामविषये अतिलघुवचनम् उक्तवन्तं तं कठोरं दण्डयितुं इच्छन्तः वयम् एव अन्विष्टवन्तः। किन्तु सः रजकः एतं विषयं कथमपि ज्ञात्वा इतः पलायितवान् अस्ति। तस्य पत्नी अपि न दृश्यते" इति उक्तवन्तः तद्ग्रामीणाः जनाः।

लक्ष्मणेन अरण्ये परित्यक्ता सीता नदीप्रवाहे पतनार्थं प्रयत्नं कृतवती। तावता तत्र आगतः वाल्मीकिमुनिः तां तस्मात् प्रयत्नात् निवारयन् आश्रमं नीतवान्। वाल्मीकेः आश्रमे सीता यमलौ प्रसूतवती। तयोः बालयोः नाम लवः कुशः चेति निश्चितम्। यदा तौ बालौ ग्रहणसमर्थौ जातौ तदा वाल्मीकिः तयोः विद्याभ्यासम् आरब्धवान्। आत्मना रचितं रामायणं तौ बोधितवान्। तौ तत् काव्यं रमणीयतया गातुं समर्थौ जातौ। सीता तौ युद्धविद्यां बोधितवती।

कदाचित् लवकुशौ– 'अयोध्याधिपतिः श्रीरामः कथम् अस्ति? तस्य पत्नी सीतामाता कथं स्यात्? इति द्रष्टव्यम्' इति आलोच्य रामकथां सुमधुरं गायन्तौ अयोध्यां प्रति गतवन्तौ।

रघुवंशस्य पूर्वजाः अश्वमेधयागं कृतवन्तः आसन्। 'तादृशे महायागे प्रवर्तितः चेत् श्रीरामः सीतावियोगदुःखं किञ्चित् वा विस्मर्तुं शक्नुयात्' इति आलोच्य आचार्यवसिष्ठादयः रामं बोधितवन्तः यत् अश्वमेधयागः आचरणीयः इति। सुवर्णमयं सीताविग्रहं स्वपार्श्वे स्थापयित्वा श्रीरामः अश्वमेधयागे उद्युक्तः अभवत्। तस्मिन् एव दिने रामकथां गायन्तौ लवकुशौ अयोध्यानगरं प्रविष्टवन्तौ। मार्गे एतौ दृष्ट्वा, एतयोः मुखात् रामकथां च श्रुत्वा



सन्तुष्टः लक्ष्मणः तौ राजप्रासादं प्रति नीतवान्।

राजप्रासादे लवकुशौ रामकथागानम् आरब्धवन्तौ। सीतायाः अग्निप्रवेशसन्दर्भं तौ प्रत्यक्षं दृष्टम् इव वर्णितवन्तौ। तत् श्रुत्वा कौसल्या, अन्तःपुरस्त्रियः, यागकारयितारः ज्येष्ठाः, परिवारजनाः, पुरप्रमुखाः, लक्ष्मणादयः च अश्रूणि स्रावयन्तः सीतायाः विग्रहं दृष्ट्वा दीर्घं निश्श्वसितवन्तः। तौ मुनिबालकौ मन्यमानः रामः स्वसमीपम् आहूय प्रीत्या आलिङ्ग्य विविधैः उपायनैः सत्कृत्य प्रेषितवान्।

यागविधिः समाप्तः। अन्ते रघुवंशस्य सूर्यध्वजेन अलङ्कृतः यागाश्वः स्वेच्छाविहारार्थं प्रेषितः। स च यागाश्वः सर्वत्र सञ्चरन् वाल्मीकेः आश्रमस्य समीपम् अगच्छत्। अश्वस्य ललाटे यत् फलकम् आसीत् तत् पठित्वा एषः रामस्य यागाश्वः इति ज्ञात्वा स्ववीरतान्यूनताम् अङ्गीकर्तुम् अशक्नुवन्तौ लवकुशौ यागाश्वं बद्धवन्तौ। यागाश्वस्य रक्षणार्थं गताः भरतः शत्रुघ्नः लक्ष्मणः च लवकुशाभ्यां सह युद्धं कुर्वन्तः मूर्च्छां गतवन्तः। अन्ते रामः एव स्वयं युद्धार्थं गतवान्।

'यदि आवयोः माता निष्कलङ्का पतिव्रता च स्यात् तर्हि आवयोः बाणौ शत्रुनाशं कुर्याताम्' इति प्रतिज्ञां कृत्वा बाणं प्रयुक्तवन्तौ लवः कुशः च। तयोः बाणयोः स्पर्शात् रामः मूर्च्छां गतः सन् अधः पतितवान्। तत्र आगता सीता रामस्य पादौ स्पृशन्ती तं सचेतनं कृतवती।

वाल्मीकिः प्रवृत्तं सर्वं निवेद्य– ''परमपवित्रां सीताम् अयोध्यां नयतु'' इति रामम् आदिष्टवान्।

''यदि सीता शपथपूर्वकं स्वपावित्र्यं प्रमाणीकृत्य प्रजाः अङ्गीकारयेत् तर्हि अहं तां परिगृह्णीयाम्'' इति उक्तवान् रामः।

अयोध्यां गता सीता पुत्रौ रामाधीनौ कृत्वा– ''मम पावित्र्यस्य साक्षिणी एषा भूदेवी मां परिगृह्णातु'' इति उक्तवती। तत्क्षणे भूमिः कम्पिता जाता। दिशः अन्धकारमय्यः जाताः। विद्युत् स्फुरिता।

मेघाः गर्जितवन्तः। 'किम् एतत् प्रवर्तते?' इति ज्ञातुम् इच्छन्तः अयोध्याजनाः धावन्तः तत् स्थलम् आगतवन्तः, यत्र सीता आसीत्। मणिमये सिंहासने उपविष्टा भूदेवी उपरि आगता। तत् सिंहासनं नागकन्यकाः ऊढवत्यः आसन्। भूदेवी सिंहासनात् अवतीर्य माता शिशुं यथा तथा सीतां हस्ताभ्याम् उन्नीय सिंहासने उपविश्य सीताम् अङ्के उपवेशितवती। भूमिः पुनः कम्पमाना जाता। सीतासहिता भूदेवी अदृश्यतां गतवती। सर्वेषु आश्चर्येण पश्यत्सु एषा अपूर्वा घटना घटिता आसीत्। समग्रा अयोध्या कम्पिता जाता चेदपि एकम् अपि वस्तु स्वस्थानात् च्युतं न आसीत्।

सीतायाः अदृश्यतां दृष्ट्वा नितरां क्रुद्धः रामः भूमेः च्छेदार्थं धनुषि बाणं योजितवान्। तदा अशरीरवाणी श्रुता— "राम! रघुवंशस्य सर्वे राजानः भूमिं मातृसमानां भावयन्तः तां पूजितवन्तः पोषितवन्तः च। किं भवान् भूमेः विदारणं करोति? स्वयं कृतस्य अपराधस्य निमित्तं भूमेः दण्डनं किमर्थम्? सीतया प्रतिज्ञा भवता एव कारिता खलु? अनन्यगतिका सीता मातरं शरणं गतवती। पुत्रवत्सला माता तां नीतवती। इदानीं किं क्रोधेन शोकेन वा? कृतस्य फलम् अनुभोक्तव्यं, तावदेव" इति। एतत् श्रुत्वा हतप्रभः रामः धनुः अधः स्थापितवान्।

रामः लवकुशौ युवराजौ कृत्वा स्वयं च विषादमूर्तिः सन् स्थितवान्।

अश्वमेधयागस्य अश्वः उत्तरदिक्तः पूर्वस्यां दिशि गच्छन् अस्ति। लक्ष्मणः, भरतः, शत्रुघ्नः च सैन्येन सह तम् अनुसरन्तः सन्ति" इति स्वकथां समापितवान् भद्रः।

शिलाप्रतिमा इव उपविश्य अश्रूणि स्रावयन् सर्वं श्रुतवान् हनूमान् अश्रूणि मार्जयित्वा उत्थाय— "अहम् एतत्क्षणे एव रामसमीपं गमिष्यामि। भवान् यथानुकूल्यं मन्दम् आगच्छतु" इति भद्रम् उक्त्वा गदाम् उन्नीय स्कन्धे आरोप्य आकाशमार्गम् आश्रित्य अयोध्यां प्रति निर्गतवान्।





# सम्पत्तिसम्पादनम्

जयपुरनामके ग्रामे रामदासनामकः कश्चित् कर्मकरः आसीत्। तस्य सम्पादनम् भोजनार्थम् अपि पर्याप्तं न भवति स्म। अतः तस्य कुटुम्बसदस्यैः बहुधा उपवासः आचरणीयः भवति स्म।

रामदासस्य एकः एव पुत्रः। तस्य नाम शिवदासः। जीवननिर्वहणार्थं मातापितृभ्याम् अनुभूयमानं कष्टं बाल्यात् अपि पश्यति स्म पुत्रः शिवदासः। अतः तस्य मनसि काचित् महती इच्छा उत्पन्ना यत्– मया शाश्वती सम्पत्तिः सम्पादनीया इति।

बहूनि वर्षाणि शिवदासः जीवन-निर्वहणकार्ये मातापित्रोः साहाय्यं कृतवान्। शिवदासस्य पञ्चदशे वयसि तस्य माता अकस्मात् केनचित् रोगेण दिवङ्गता। तस्याः मरणवार्तां श्रुत्वा तद्ग्रामीणाः जनाः वदन्ति स्म यत्– यदि उत्तमम् औषधं दत्तं स्यात् तर्हि सा इतोऽपि कानिचन वर्षाणि जीवितवती स्यात् इति।

जनानाम् एतादृशं वचनं श्रुत्वा शिवदासः चिन्तितवान्– "दारिद्र्यकारणतः एव मात्रे उत्तमम् औषधं दापयितुं न शक्तम्। अतः जीवने मया अधिकं धनं सम्पादनीयम्" इति।

वर्षद्वयानन्तरं शिवदासस्य पिता अपि दिवङ्गतः। पितुः मरणं दृष्ट्वा शिवदासः दिग्भ्रान्तः। तदा तद्ग्रामस्य प्रमुखः भूषणः शिवदासं पृष्टवान्– "वत्स! भवतः जीवने अग्रे कष्टं न भवेत् इति विचिन्त्य भवतः पिता मम समीपे शतं रूप्यकाणि दत्तवान् अस्ति। अहं तत् धनं भवते ददामि। तेन धनेन भवान् किं करोति?" इति।

भूषणस्य एतत् वचनं श्रुत्वा शिवदासः किञ्चित् धैर्यं प्राप्तवान्। सः भूषणसमीपे स्वकीयाम् इच्छां प्रकटितवान्– "अहं प्रभूतं

धनं सम्पादयितुम् इच्छामि'' इति।

शिवदासस्य वचनं श्रुत्वा भूषणः मन्दहासपूर्वकं– ''तर्हि प्रथमं एतानि शतं रूप्यकाणि स्वीकृत्य सहस्रं रूप्यकाणि कृत्वा आनयतु'' इति वदन् भूषणाय शतं रूप्यकाणि दत्तवान्।

शिवदासः तानि शतं रूप्यकाणि स्वीकृत्य कुक्कुटस्य वाणिज्यम् आरब्धवान्। किन्तु केनचित् रोगेण पीडिताः बहवः कुक्कुटाः मृताः। तथापि महता श्रमेण शिवदासः द्विशतं रूप्यकाणि सम्पादितवान्।

द्विशतरूप्यकैः शिवदासः दश अजान् क्रीतवान्। तृणखादनसमये द्वौ अजौ वृकेण भक्षितौ। अन्ये चत्वारः कैश्चित् चोरैः चोरिताः। एकस्य अजस्य पादभङ्गः जातः। एतेन शिवदासस्य महती हानिः जाता। अतः शिवदासः अन्ते अजानां विक्रयणतः पञ्चाशत् रूप्यकाणि प्राप्तवान्।

ततः शिवदासः पुष्पविक्रयणम् आरब्धवान्। तत्रापि सर्वाणि पुष्पाणि विक्रीतानि न भवन्ति स्म। अतः सप्ताहाभ्यन्तरे एव पञ्चविंशतिरूप्यकाणां हानिः जाता शिवदासस्य।

तथापि शिवदासः न खिन्नः। छलेन शष्कुलीवाणिज्यम् आरब्धवान्। शिवदासः कदाचित् शष्कुलीः स्वीकृत्य विपणिं गच्छन् आसीत् विक्रयणार्थम्। मध्येमार्गं वृष्टिः आगता। वृष्टिकारणतः शष्कुल्यः सर्वाः आर्द्राः। अतः तादृशशष्कुलीविक्रयणेन पञ्च रूप्यकाणि केवलं प्राप्तवान् शिवदासः।



एतेन अतीव खिन्नः सः गृहं प्रति प्रस्थितः। गमनसमये मार्गे सः रोदनं कुर्वन्तं चतुर्वर्षीयं कञ्चित् बालं दृष्टवान्। शिवदासः तस्य बालकस्य समीपं गत्वा– "किम् अभवत्? किमर्थं भवान् रोदिति?" इति पृष्टवान्। तदा तेन ज्ञातं यत्– सः बालः पार्श्वग्रामस्य राजशेखरस्य पुत्रः इति।

शिवदासः तस्य सान्त्वनं कृत्वा तस्मै खाद्यानि दापितवान्। अनन्तरं तं बालं तस्य गृहं प्रापितवान् च। एतदर्थम् एकस्य रूप्यकस्य व्ययः कृतः शिवदासेन।

शिवदासस्य उपकारं प्रशंसन्तौ बालस्य मातापितरौ उक्तवन्तौ– "वयम् अतीव दरिद्राः। प्रत्युपकाररूपेण भवते दातुम् अस्माकं समीपे किमपि नास्ति" इति।

तदा शिवदासः– "प्रतिफलम् अपेक्ष्य अहम् एतत् साहाय्यं न कृतवान्" इति उक्त्वा ततः गतवान्।

शिवदासः यदा किञ्चिद्दूरं गतवान् तदा मार्गपार्श्वे कञ्चित् वस्त्रग्रन्थिं दृष्टवान्। तस्मिन् शतं रूप्यकाणि आसन्। 'एतत् यस्य कस्यापि धनं स्यात्। अतः एतत् धनं नेतुं कोऽपि आगच्छेत्' इति किञ्चित्कालं प्रतीक्षां कृतवान् शिवदासः। किन्तु न कोऽपि आगतवान् तत्र।

शिवदासः ततः किञ्चित् अग्रे गतवान्। एकत्र केचन जनाः समूहरूपेण स्थिताः आसन्। शिवदासः तत्र गत्वा दृष्टवान्। काचित् महिला जनानां मध्ये उपविश्य रोदनं कुर्वती आसीत्। विचारणात् ज्ञातं यत्– सर्पेण





दष्टस्य पत्युः चिकित्सार्थं धनं नास्ति इति कारणतः शङ्करनामकस्य पत्नी रोदनं कुर्वती अस्ति इति।

एतत् ज्ञात्वा शिवदासः मार्गे स्वेन प्राप्तानि शतं रूप्यकाणि शङ्करस्य पत्न्यै यच्छन्– "अम्ब! भवती दुःखं मा करोतु। एतानि शतं रूप्यकाणि स्वीकृत्य पत्युः औषधं कारयतु" इति उक्त्वा ततः बहिः आगतवान्।

ततः शिवदासः अग्रे गतवान्। किञ्चिद्दूरं यदा गतं तदा अरण्यं प्राप्तं तेन। अरण्यमार्गे गमनसमये चिन्तामणिनामकः कश्चित् प्रयाणिकः मिलितवान्। शिवदासः चिन्तामणिः च वार्तालापं कुर्वन्तौ गच्छन्तौ आस्ताम्। तस्मिन् समये केचन चोराः अकस्मात् तयोः उपरि आक्रमणं कृतवन्तः।

चिन्तामणेः समीपे किञ्चित् सुवर्णम् आसीत्। चोराः प्रथमं शिवदासस्य युतकादिकं परिशीलितवन्तः। तत्र किमपि न लब्धम्। अनन्तरं ते चिन्तामणेः युतकादिकं परिशीलयितुम् उद्युक्ताः। तावति काले चिन्तामणिः महता चातुर्येण स्वसमीपे विद्यमानं सुवर्णं शिवदासस्य स्यूते पातितवान् आसीत्। एतेन चोराः चिन्तामणेः परिशीलनेन अपि किमपि न प्राप्तवन्तः।

चोराणां निर्गमनानन्तरं चिन्तामणिः शिवदासस्य स्यूततः सुवर्णं बहिः निष्कासयन् 'भवतः कारणतः मम सुवर्णं नष्टं न जातम्' इति वदन् चिन्तामणिः आग्रहपूर्वकं शिवदासाय किञ्चित् सुवर्णं दत्त्वा ततः गतवान् एव।

अग्रे गच्छन् शिवदासः मार्गपार्श्वे वृक्षस्य शाखायाम् उद्बन्धेन आत्महत्यां कर्तुम् उद्युक्तं कञ्चित् दृष्टवान्। तं दृष्टवतः शिवदासस्य अन्तरङ्गे करुणा उत्पन्ना। कोपः अपि उत्पन्नः।

शिवदासः तस्य समीपं गत्वा– "किमर्थं भवान् आत्महत्यां कर्तुम् उद्युक्तः? एतादृशकार्यार्थम् एतावद्दूरं किमर्थम् आगन्तव्यम्?" इति कोपेन पृष्टवान्।

यः आत्महत्यां कर्तुम् उद्युक्तः तस्य नाम दामोदरः इति। तस्य पुत्र्याः विवाहः निश्चितः आसीत्। वरदक्षिणा दातव्या इति

वरपक्षीयाणाम् आग्रहः। एतत् अङ्गीकृतवान् आसीत् दामोदरः। विवाहमुहूर्तसमयेऽपि दामोदरः वराय दातव्यं धनं दातुं न शक्तवान् दारिद्र्यकारणतः। अतः वरपक्षीयाः दामोदरं सम्यक् तर्जितवन्तः। एतेन प्रकरणेन अपमानितः दुःखितः च दामोदरः अरण्यम् आगत्य आत्महत्यां कर्तुं प्रयतमानः आसीत्।



एतत् दृष्ट्वा शिवदासः– "यदि वरदक्षिणा दातुं न शक्यते तर्हि भवता न अङ्गीकरणीयम् आसीत्। इदानीम् एतत् सुवर्णं स्वीकरोतु। गृहं गत्वा पुत्र्याः विवाहं निरातङ्कं निर्वर्तयतु" इति वदन् स्वसमीपे विद्यमानं सुवर्णं दामोदराय दत्तवान्।

शिवदासेन कृतेन साहाय्येन दामोदरः आनन्देन अश्रूणि मुञ्चन्– "मित्र! एतादृशं साहाय्यं कृतवान् भवान् उदारः एव। प्रभूतधनेन देवः भवन्तम् अनुगृह्णातु। भवान् कृपया मम गृहम् आगत्य मम पुत्रीम् आशिषा अनुगृह्णातु" इति प्रार्थितवान्।

शिवदासः दामोदरेण सह तस्य गृहं गतवान्। दामोदरः पुत्र्याः विवाहं निर्वर्तितवान्। तं विवाहसमारम्भं प्रति आगतः कश्चन ज्येष्ठः महापुरुषः शिवदासं दृष्ट्वा तस्य समीपम् आगतवान्, पृष्टवान् च– "भवान् रामदासस्य पुत्रः खलु! अहं नागेशः। वर्षचतुष्टयात् पूर्वम् अरण्ये गच्छन्तं मां चोराः सम्यक् ताडितवन्तः। तस्मिन् समये आसन्नमरणं मां स्कन्धे आरोप्य स्वगृहं नीत्वा उपचारेण मां जीवितवान् भवतः पिता। इदानीं कथम् अस्ति भवतः पिता? कुशली वा?" इति।

तदा शिवदासः पितुः मरणवार्तां निवेदितवान्। रामदासः दिवङ्गतः इति ज्ञात्वा नागेशः अतीव खिन्नः। अनन्तरं सः शिवदासं स्वगृहं नीतवान्– "मां उज्जीवितवते भवतः पित्रे प्रत्युपकाररूपेण दातुं मत्समीपे तदा किमपि नासीत्। इदानीं भवान् एतत् स्वीकरोतु। कृपया मास्तु इति मा वदतु" इति वदन् उत्तमानि वस्त्राणि सहस्रं रूप्यकाणि च दत्तवान्।

शिवदासः नागेशेन दत्तानि वस्त्राणि धनं च स्वीकृत्य स्वग्रामं गतवान्। तत्र भूस्वामिनः

भूषणस्य समीपं गत्वा– "पश्यतु। भवता दत्तं शतं रूप्यकाणि यानि आसन् ततः सहस्रं रूप्यकाणि सम्पाद्य आनीतवान् अस्मि" इति उक्तवान्।

तदा भूषणः पृष्टवान्– "भवान् केन प्रकारेण धनं सम्पादितवान्?" इति।

तदा शिवदासः प्रवृत्तं समग्रं भूषणं निवेदितवान्। एतत् सर्वं श्रुत्वा भूस्वामी भूषणः मन्दहासपूर्वकम् उक्तवान्– "वत्स! शिवदास! भवान् 'स्वशक्त्या एव अहं सर्वं सम्पादयामि। तादृशं सामर्थ्यं मम अस्ति' इति चिन्तयन् किमपि वाणिज्यम् आरब्धवान्। तेषु वाणिज्येषु कुत्रापि भवान् लाभं न प्राप्तवान्। अपि तु हानिः एव जाता। इदानीं भवतः समीपे विद्यमानं धनं स्वशक्त्या सम्पादितं न, अपि तु भवतः उत्तमव्यवहारस्य कारणतः प्राप्तम्। अत्र भवतः शक्तिसामर्थ्यं वा वाणिज्यसामर्थ्यं वा किमपि नास्ति" इति।

भूषणस्य वचनेन शिवदासः वास्तविकीं स्थितिं ज्ञातवान्। स्वकीयं दोषं ज्ञातवान् च। सः अनुक्षणं भूस्वामिनः भूषणस्य पादौ गृहीत्वा उक्तवान्– "तात! मम अज्ञानं दूरीकृतवान् भवान्। प्रभूतं धनं सम्पादनीयम् इति यः उन्मादः आसीत् ततः बहिः आगतवान् अस्मि। इदानीं मया किं करणीयम् इति वदतु कृपया" इति।

तदा भूषणः उक्तवान्– "भवतः कृषिकार्ये यदि आसक्तिः अस्ति, तर्हि मम कार्ये साहाय्यं करोतु। उत्तमं वेतनं दास्यामि। भवतः विवाहम् अपि कारयामि। धनविषये किञ्चित् जागरूकः भवतु। यदि विना कारणं व्ययः न क्रियते, तर्हि एव प्रभूतं धनं सम्पादयितुं शक्यते" इति।

शिवदासः भूषणस्य वचनम् अङ्गीकृतवान्। अनन्तरकाले शिवदासः सर्वेषु अपि कार्येषु भूषणस्य साहाय्यं कुर्वन् सज्जनतां, सामर्थ्यं, विश्वासार्हतां च सम्पादितवान्। काञ्चित् तरुणीं परिणीय बहूनि वर्षाणि सुखेन जीवितवान् च।



# र स वा र्ताः



## लघुतमं पुस्तकम्



एवं हि श्रूयते यत् स्वीडन्देशे ल्याण्ड्स्क्रोनानगरे लघुतमः खुरान्ग्रन्थः अस्ति इति। अरबीभाषया स्थितस्य एतस्य ग्रन्थस्य स्थौल्यं २.७ सें.मी. परिमितम्। एतस्य पुस्तकस्य स्वामी वदति यत् एतत् अहं पितृतः प्राप्तवान् इति, मम पिता १९६० तमे वर्षे सघोषविक्रयणस्थले एतं ग्रन्थं प्राप्तवान् इति च। लघुतमं पुस्तकं चीनादेशे अस्ति इति एतावत्पर्यन्तं भाव्यते स्म। इदानीम् एतत् पुस्तकं गिन्नीसुपुस्तके स्थानं प्राप्तवत् अस्ति।



## हिमट्रेन्यानम्

आधुनिकैः सौलभ्यैः युक्तम्, अत्यधिकवेगेन सञ्चरणे समर्थं ट्रेन्यानं जर्मन्देशे निर्मितम् अस्ति। हिममये प्रदेशे एतत् यद्यपि न सञ्चरति, तथापि एतस्य नाम तु 'ऐसुट्रेन्' इति। एतत् प्रतिघण्टं २५० मैल्वेगेन सञ्चरति। अमेरिकादेशस्था 'अण्ट्राक्'नामिका काचित् संस्था २५ रैलुयानानि क्रीतवती अस्ति। १९९४ तम-वर्षस्य जनवरीमासे अमेरिकादेशस्य वायव्यप्रदेशे एतानि सञ्चारस्य आरम्भं करिष्यन्ति।

## पिशाचचित्रं गृहीतं वीडियोयन्त्रेण



सञ्चरतां पिशाचानां भाविचित्रं स्वीकृतम् इति वार्ता तदा तदा श्रूयते। ऐदम्प्राथम्येन पिशाचः कश्चित् वीडियोयन्त्रेण चित्रीकृतः अस्ति। फिजीद्वीपे पार्लिमेण्टभवने कदाचित् रक्षकभटाः सञ्चरन्तं पिशाचं दृष्ट्वा झटिति वीडियोयन्त्रेण तं चित्रीकृतवन्तः। ततः चित्रमुद्रिका प्रधानमन्त्रिणे प्रतिपक्षनायकाय च प्रेषिता। तौ तां दृष्ट्वा तस्याः प्रसारार्थम् अनुमतिं दत्तवन्तौ। चित्रे मनुष्याकारिका काचित् छायाकृतिः सञ्चरन्ती दृश्यते। फिजीसम्प्रदायानुसारि-वेषेण स्वकटिभागम् आच्छादितवती अस्ति सा आकृतिः।

## नास्ति प्रपञ्चे शीतलारोगः

एतावत्पर्यन्तं शीतलारोगनिरोधकं सूच्यौषधं बालेभ्यः बलात् दीयते स्म। यतः एतस्य साङ्क्रामिकरोगस्य कारणतः बहवः तरुणाः तरुण्यः च प्राणैः वियुक्ताः भवन्ति स्म। एतस्य महारोगस्य कारणभूताः रोगाणवः के इति यदा ज्ञातं ततः आरभ्य एतस्य रोगस्य निर्मूलनार्थं प्रयत्नः आरब्धः। इदानीम् एषः प्रयत्नः सफलतां प्राप्तवान् अस्ति। केभ्यश्चित् वर्षेभ्यः प्रपञ्चे कोऽपि एतेन रोगेण पीडितः नास्ति। एतद्रोगकारणभूताः रोगाणवः इदानीं प्रयोगालयमात्रे सन्ति, नान्यत्र कुत्रापि। विश्वारोग्यसंस्थया निर्णीतम् अस्ति यत् आगामिनि डिसेम्बर्मासे ३१ दिनाङ्के एते प्रयोगालयस्थाः रोगाणवः अपि नाशनीयाः इति।



# गङ्गास्नानफलम्

कस्मिंश्चित् ग्रामे कश्चन सरलस्वभावः गृहस्थः आसीत्। सः कदाचित् किमपि पापकार्यं कृतवान्। अनन्तरं पश्चात्तापम् अनुभवन् सः ज्येष्ठानां समीपं गत्वा– "मया कृतस्य पापकार्यस्य परिहारार्थं कः उपायः?" इति पृष्टवान्।

तदा ज्येष्ठाः उक्तवन्तः– "गङ्गानद्याः तीरे ध्यानं कृतं चेत् दोषपरिहारः भविष्यति। अतः तथा करोतु" इति।

अनन्तरदिने एव सः गृहस्थः कुटुम्बस्य समग्रं व्यवहारं पुत्राय समर्प्य एकं कलशं दण्डं च स्वीकृत्य गङ्गानदीम् अन्विष्यन् गृहात् निर्गतवान्।

मध्येमार्गं काचित् लघुनदी लब्धा। तां लघुनदीम् एव गङ्गानदीं मत्वा सः तत्रैव स्नानं कृत्वा ध्यानं कुर्वन् उपविष्टवान्। एवमेव पञ्चषाणि वर्षाणि अतीतानि।

एकस्मिन् दिने शिवभक्तः कश्चित् संन्यासी तेन मार्गेण गच्छन् आसीत्। संन्यासी ध्यानं कुर्वन्तम् एतं पृष्टवान्– "भोः, भवान् अत्र किं कुर्वन् अस्ति?" इति।

तदा सः गृहस्थः उक्तवान्– "अज्ञानवशात् एकं पापकार्यं कृतम् आसीत् मया। तस्य परिहारार्थम् एतस्मिन् गङ्गातीरे देवध्यानं कुर्वन् अस्मि" इति।

"एतां दुर्गन्धमयीं कुनदीम् एव गङ्गां भावयति वा भवान्?" इति आश्चर्येण पृष्टवान् संन्यासी।

"श्रीमन्! किं वदति भवान्? किम् एषा गङ्गानदी न?" इति आश्चर्येण प्रतिप्रश्नं कृतवान् गृहस्थः।

तदा संन्यासी हसन्– "मूर्ख! एषा कुनदी क्व? पवित्रा गङ्गानदी क्व? अजं गजं भावितवान् भवान्? मृद्राशिं पर्वतं

भावितवान्। मम तु आश्चर्यं यत् लोके भवादृशः अपि मन्दमतिः अस्ति इति। परमपवित्रा गङ्गानदी इतः सुदूरे अस्ति'' इति उक्तवान्।

''श्रीमन्! भवता अहं बहुधा उपकृतः'' इति वदन् गृहस्थः दण्डं कलशं च गृहीत्वा ततः प्रस्थितवान्।

किञ्चिद्दूरं गमनानन्तरं काचित् अन्या लघुनदी प्राप्ता। 'एषा गङ्गानदी स्यात् एव' इति निश्चित्य सः गृहस्थः नद्याः तीरे ध्यानार्थम् उपविष्टवान्।

नद्यां स्नानं कुर्वन्, तीरे उपविश्य ध्यानं कुर्वन् सः पञ्च वर्षाणि यापितवान्। कदाचित् तेन मार्गेण गच्छन् कश्चन कापालिकः एतं दृष्ट्वा एतस्य प्रयत्नं ज्ञात्वा– ''अप्रसिद्धायाः एतस्याः तीरे तपः कुर्वन् पञ्च वर्षाणि यापितवान् खलु भवान्? यदि एतावान् कालः गङ्गातीरे यापितः स्यात् तर्हि बहु पुण्यम् प्राप्स्यत्'' इति उक्तवान्।

तदा सः गृहस्थः आश्चर्येण– ''किम् उक्तं तत्रभवता? एषा गङ्गानदी न वा?'' इति पृष्टवान्।

''एषा लघुनदी। गङ्गानदी तु सुविशाला। गङ्गायाः तीरे सद्गतिम् इच्छन्तः सहस्रशः जनाः सदा भवन्ति। गङ्गा तु पतितपावना महानदी'' इति उक्तवान् कापालिकः।

''श्रीमन्! भवतः दर्शनात् मया वस्तुस्थितिः ज्ञाता। तदर्थं कृतज्ञः अस्मि'' इति उक्त्वा दण्डं कलशं च स्वीकृत्य ततः प्रस्थितवान् सः गृहस्थः। केषाञ्चित् दिनानां



प्रयाणस्य अनन्तरं तेन नर्मदानदी प्राप्ता। 'सुविशाला एषा गङ्गा एव स्यात्' इति चिन्तयन् सः तस्याः तीरे वसन् तपः कृतवान्। पुनः पञ्च वर्षाणि अतीतानि।

अथ कदाचित् कश्चन यात्रिकः एतस्य गृहस्थस्य समीपे एव स्थित्वा 'नर्मदे' इति सम्बोध्य स्तोत्रपठनम् आरब्धवान्।

एतत् श्रुत्वा एषः गृहस्थः तस्य यात्रिकस्य समीपं गत्वा– "श्रीमन्! एतस्याः नद्याः नाम किम्?" इति पृष्टवान्।

"एतस्याः नाम न जानाति वा भवान्? एषा परमपवित्रा नर्मदा" इति उक्तवान् सः यात्रिकः।

"एवं वा! मन्दमतिना मया एतत् न ज्ञातम् आसीत्। वस्तुस्थितिं वदन् भवान् माम् उपकृतवान्" इति उक्त्वा कलशं दण्डं च स्वीकृत्य ततः प्रस्थितवान् सः गृहस्थः।

किन्तु इदानीं तस्य गृहस्थस्य शरीरे शक्तिः नितरां क्षीणा आसीत्। पञ्चदश वर्षाणि यावत् तपः कृतम् इत्यतः शरीरं नितरां दुर्बलं जातम् आसीत्। प्रयाणे नितरां क्लेशम् अनुभवति स्म सः। सूर्यतापतः शरीरं पीडितं भवति स्म। पादौ अग्रे गन्तुं न उत्सहेते स्म। तथापि सः प्रयाणं न स्थगितवान्। एवं महता कष्टेन गच्छन् सः एकं पर्वतशिखरं प्राप्तवान्।

ततः तेन दूरे गङ्गानदी दृष्टा। गङ्गानद्यां स्नानं कुर्वन्तः असङ्ख्याः जनाः अपि दृष्टाः तेन। गङ्गानद्याः दर्शनेन गृहस्थस्य हृदयम् आनन्देन पूर्णम् अभवत्। तत्रैव सः प्राणैः वियुक्तः अभवत्। यमदूताः आगत्य तं यमधर्मराजस्य समीपं नीतवन्तः।

"एषः पापं किमपि कृतवान् वा?" इति चित्रगुप्तं पृष्टवान् यमधर्मराजः।

"अल्पं पापं कृतवान् आसीत् एषः। किन्तु दृष्टां नदीं गङ्गां भावयन् एषः पञ्चदश वर्षाणि तपः कृतवान्। अतः गङ्गानद्याः तीरे तपःकरणात् यत् पुण्यं प्राप्यते तत् पुण्यं प्राप्तवान् अस्ति एषः" इति उक्तवान् चित्रगुप्तः।



# प्रकृतिवैचित्र्याणि–



## शुकाः

गृहे पाल्यमानेषु पक्षिषु शुकः अन्यतमः। जनाः शुकान् वचनम् अपि पाठयन्ति। शुकजातौ ३०० अधिकाः प्रभेदाः सन्ति। एतेषु ७० प्रभेदाः विनाशस्थितौ सन्ति। मध्य-अमेरिकाप्रदेशे दक्षिण-अमेरिकाप्रदेशे च दृश्यमानाः 'माकाव्' शुकाः शुकेषु एव बृहदाकारकाः। न्यूगिनिप्रदेशे दृश्यमानाः 'पीग्मि पैरेट्स्' शुकाः च सर्वलघवः। सामान्यतः शुकानां शरीरं हरितं चञ्चुः रक्ता च भवति। मेक्सिकोप्रदेशे सिन्धूरवर्णीयाः अपि दृष्टिगोचराः भवन्ति। (चित्रे यथा तथा) शुकानाम् आकारः सुन्दरः। महाशुकाः ८५ से.मी. दीर्घाः, लघुशुकाः १० से.मी. दीर्घाः च भवन्ति। न्यूजील्याण्ड्देशीयाः 'किया' शुकाः मांसभक्षिणः। वक्रा चञ्चुः, पुरोमुखाभ्यां पृष्ठमुखाभ्यां च नखाभ्यां युक्तौ पादौ च शुकानां वैशिष्ट्यम्।



## शल्यमीनः

आत्मरक्षणार्थं पशुपक्षिणः विविधान् उपायान् आश्रयन्ति। शल्यमीनस्य तु अपूर्वः आत्मरक्षणोपायः। यदा कश्चन अन्यजन्तुः एतं खादितुम् आगच्छति तदा एषः जलेन उदरं पूरयित्वा शरीरं कन्दुकाकारं करोति। तदा शरीरं परितः स्थितानि कण्टकसदृशानि शल्यानि उन्मुखानि तिष्ठन्ति। एतत् दृष्ट्वा भीताः खादनोद्देशेन आगताः जन्तवः ततः पलायनं कुर्वन्ति।



## पाटलपुष्पैः जपमाला

लोके प्रायः तादृशः कोऽपि न स्यात् यश्च पाटलपुष्पं न इच्छेत्। जवहरलालनेहरूवर्यस्य तु पाटलपुष्पम् प्रियतमम् आसीत् इति सर्वविदितम्। सः सर्वदा स्वयुतके पाटलपुष्पं धरति स्म। एतत् पुष्पसस्यं पर्शियनुजनाः स्वदेशतः अत्र आनीतवन्तः। षष्ठे शतके पर्शियादेशः 'पाटलपुष्पभूमिः' इति उच्यते स्म। तत्रत्यं 'गुलिस्थान' नामकं पाटलोद्यानं जगत्प्रसिद्धम् आसीत्। एवं हि श्रूयते यत् तस्य उद्यानस्य अपरपार्श्वं प्राप्तुम् अश्वारोहिणा राज्ञा षट् दिनानि स्वीक्रियन्ते स्म इति। क्रि.पू. ३००० वर्षेभ्यः पूर्वम् एव चीनादेशे पाटलपुष्पसस्यानि आसन्। महिद्यासः तानि सस्यानि ग्रीकदेशं नीतवान्। पाटलपुष्पदलानि आतपेन शोषयित्वा कृष्णवर्णं संयोज्य मणीन् विरचय्य ततः जपमाला अपि सज्जीक्रियते।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!




SUPER
RUBBER

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकां मार्च्-९४ मासे प्रकटयिष्यामः।**



Anant Desai



S. B. Prasad

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

**'नवम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **खाद्यं हृद्यमिदम्।**

द्वितीयचित्रम् - **स्नेहः शुद्धोऽयम्।**

प्रेषिका - अद्रिजा के., 'गोकुलम्', तृक्काक्करा, बि.ए.सि.(पि.ओ) कोची-२१, केरलम्।

---




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा



प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में–
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. 252.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,
पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. 252.00

अपने चन्दे की रकम डिमांड ड्राफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

